# चन्दमामा

सम्पुटः - १७ फेब्रवरी - २००१ सञ्चिका - ११



## अन्तरङ्गम्

**कथाः**
राजसम्मानः ....... ०९
भाग्यवान् ....... १६
बिन्दुसारस्य चित्रलेखनम् ....... २४
अष्टावधानम् ....... ५०
सर्वसम्मतः निर्णयः ....... ६२
उत्कोचग्राहिता ....... ६५
**पौराणिकधारावाहिनी**
महाभारतम् - ५९ ....... ४३
**चित्रकथामाला - २**
पिशाचाभिनयः ....... ५५
**ज्ञानप्रदधारावाहिनी**
भारतगौरवगाथा - ११ ....... २०
**नववर्षविशेषाः**
विंशतितमे शतके भारतम् - २ ....... २७
**स्थिरशीर्षिकाः**
वार्ताविशेषः ....... ०६
एतन्मासे जातः महापुरुषः ....... ०८
स्वपरम्परा अभिज्ञायताम् ....... ६०
सर्जनात्मकस्पर्धा ....... ६१
चित्रशीर्षिकास्पर्धा ....... ६६

### एतस्य अङ्कस्य विशेषाः



राजसम्मानः
(वेताल कथा)

बिन्दुसारस्य चित्रलेखनम्





अष्टावधानम्

भारत-
गौरव-
गाथा



Printed and Published by B. Viswanatha Reddi at B.N.K Press Pvt. Ltd., Chennai–600 026 on behalf of Chandamama India Limited, No.82, Defence Officers Colony, Ekattuthangal, Chennai - 600 097. Editor: Viswam

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| अङ्कः | - lap |
| अनुपस्थितिः | - absence |
| अभिप्रेतवन्तः | - intended (plural) |
| अभ्यर्थना | - demand |
| अभ्यर्थी | - candidate |
| अवधानम् | - attention |
| असिधारा | - edge of the sword |
| आघातः | - shock (mental) |
| आनन्दतुन्दिलः | - delighted |
| उत्कृष्टम् | - superior |
| उपलब्धिः | - achievement |
| उपहासः | - teasing |
| ऊरुः | - thigh |
| कृष्णफलकम् | - black board |
| गणनामणिसाधनम् | - abacus |
| चित्रकारः | - artist |
| छद्मवेषः | - incongnito |
| जवनिका | - curtain |
| तीक्ष्णधारायुक्ता | - sharp edged (knief) |
| दूरवाणी | - telephone |
| दूरापास्तः | - out of quistion |
| नर्मसचिवा | - pleasure - companion |
| पाषाणक्षेपणम् | - throwing the stone |
| प्रस्तावः | - resolution |
| प्रारूपम् | - draft |
| भाजनम् | - division |
| मतदानम् | - voting |
| मतीयवैमनस्यम् | - communal destruction |
| मूल्याङ्कः | - stamp |
| राजनैतिकम् | - political |
| राजप्रतिनिधिः | - viceroy |
| विदुषी | - scholar (f) |
| विभीषिका | - terror |
| व्याक्षेप्तव्यः | - should be postponed |
| शोभायात्रा | - procession |
| श्रोता | - listener |
| सन्निहितः | - came near |
| स्वायत्तः | - private |
| हस्तच्युतः | - missed |
| हृष्टः | - rejoiced |



*संस्थापकौ -*

**चक्रपाणिः नागिरेड्डी च**

# नवसहस्रके चन्दमामा...

चन्दमामायाः आरम्भः यदा जातः तदा या स्थितिः आसीत् तां स्थितिं बहवः चन्दमामावाचकाः ऊहितुम् अपि न अर्हन्ति । स च स्वातन्त्र्यसूर्यस्य उदयात् पूर्वं दृश्यमानः उषःकालः आसीत् । दूरदर्शनं, सङ्गणकम्, अन्तर्जालव्यवस्था वा, आधुनिकमुद्रणतन्त्रज्ञानानि वा न आसन् तदा । हस्तेन अक्षरसंयोजनं क्रियते स्म तत्काले । काष्ठकोषात् एकैकम् अक्षरम् उन्नीय संयोज्य पदानि रचयति स्म अक्षरसंयोजकः ।

तन्त्रज्ञानविकासकारणतः अद्य चन्दमामा सौन्दर्येण गुणोत्कर्षेण च विराजते, यच्च वैभवं भवतां पितुः पितामहस्य वा काले न आसीत् । अद्य चन्दमामा नवदिगन्तम् अपि व्याप्तवती अस्ति । चन्दमामायाः शैलीम् अनुकुर्वत्यः अनेकाः पत्रिकाः अद्य देशे विदेशे च भारतीय-ज्ञानपरम्परां वाचकान् प्रापयन्ति । चन्दमामा दूरदर्शनद्वारा अपि ज्ञाननिधिं जनानां पुरतः उपस्थापयितुं प्रयतमाना अस्ति । सप्तमे दशके चन्दमामायां याः कथाः प्रकाशिताः, याश्च वाचकैः बहुधा प्रशंसिताः, याश्च उदात्तजीवनक्रमं बोधयन्ति, ताः कथाः हैदराबाददूरदर्शनकेन्द्रेण एतस्मात् मासात् प्रदर्श्यन्ते । अन्याः प्रसारवाहिन्यः अन्यभाषाभिः ताः कथाः (तत्सदृश्यः वा कथाः) प्रसारयिष्यन्ति ।

एवं चन्दमामा, स्वस्य वाचकानां स्वस्थ-सन्तोषपूर्णजीवने प्रकाशः सन्तोषः च कल्पनीयः इत्येतम् आदर्शं बद्धादरतया पालयन्ती, मानवसमवायस्य लाभाय विज्ञानं तन्त्रज्ञानं च उपयुञ्जानस्य समूह-माध्यमस्य योग्यम् उपयोगं प्राप्तुं सन्नाहं कुर्वती, प्रगतिपथे पदं स्थापयति ।



# वार्ताविशेषः

## निरन्तरभाषणम्...



भाषणस्पर्धायां त्रिचतुरनिमेषान् यावत् भाषणम् अपि कियत् कष्टकरम् इति तरुण-भाषणकाराः जानन्ति । 'मदीयान् सर्वान् विचारान् प्रतिपादयितुम् इतोऽपि केचन निमेषाः अपेक्षिताः आसन्' इति केचन चिन्तयेयुः अपि । चेन्नैनगरे स्थितस्य काशीनाथस्य एतादृश्यः समस्याः न आसन् । तेन भाषणं कृतं, न स्पर्धार्थम् । सप्तविंशतिवर्षीयः सः – 'महिलानाम् अद्यतनी स्थितिः' इत्येतं विषयम् अधिकृत्य भाषणं कृतवान् । नवम्बर्मासस्य तृतीये दिनाङ्के प्रातः दशवादने तेन भाषणम् आरब्धम् । अनन्तरदिने सायं चतुर्वादने तस्य भाषणं समाप्तम् । ३० घण्टाः यावत् निरन्तरं भाषणं कृतवान् सः । गिन्नीसपुस्तके स्वनाम्नः योजनार्थं तेन एतत् साहसं कृतम् । इतःपूर्वं २४ घण्टाः यावत् भाषणं कृतवतः मैकेल् मोरल्(६४)नामकस्य (न्यूझील्याण्ड्देशीयस्य) नाम गिन्नीसपुस्तके आसीत् । काशीनाथस्य भाषणं श्रोतुम् उच्चन्यायालयस्य न्यायाधीशः, अन्ये केचन गण्याः च उपस्थिताः आसन् ।

## अन्धानां कृते उद्यानम्...

नववर्षारम्भं निमित्तीकृत्य भारतेन अन्धानां कृते उद्यानं निर्मितम् अस्ति । राष्ट्रिय-सस्य-संशोधन-संस्था (टि. एन्. बि. आर्. ऐ.) लखनवऊनगरे 'अन्धोद्यानं' निर्मितवती अस्ति । एषा जगति एव अद्वितीया । अत्र आगताः पुष्पाणां गन्धस्य आघ्राणनेन सहैव, पुष्पसस्यस्य जाति-गुणादि-विषयान् अपि पठितुम् अर्हन्ति ब्रेल्लिप्या । एतानि विवरणानि द्रष्टॄणाम् आनुकूल्याय स्कन्धोन्नतस्तरे स्थापितानि सन्ति । द्रष्टारः सस्यपार्श्वस्थं दूरवाणीध्वनि-ग्राहकम् उन्नीय ध्वनिमुद्रितानि अधिकविवरणानि श्रोतुम् अपि अर्हन्ति । सचक्रासने उपविश्य अपि समग्रे उद्याने सञ्चारः कर्तुं शक्यः ।



## किं तेजोभवनम् अदृश्यतां गतम् ?



अयं प्रश्नः कचपुरीयान् कदाचित् अबाधत । तच्च नगरं यमुनानद्याः तीरे तेजोमन्दिरात् (ताजमहल्तः) ४०० मीटर्दूरे अस्ति । तत्रत्येषु सर्वेषु पश्यत्सु एव प्रसिद्धः ऐन्द्रजालिकः पि. सि. सर्कारः (कनीयान्) तेजोभवनम् अदृश्यम् अकरोत् गते नवेम्बर्मासे अष्टमे दिनाङ्के । निमेषद्वयं यावत् श्वेतशिलामयं तत् भवनं केनापि न दृष्टम् एव । सर्वे नेत्रे विशालीकृत्य पुनः पुनः परिशीलितवन्तः । तेजोभवनं तु न दृष्टं तैः । अनन्तरं सर्कारस्य पुत्री मेनका तत् भवनं दृष्टिगोचरं कृतवती । एतत् कथं साधितम् इति पृष्टः सर्कारः अवदत् – ''अहम् इन्द्रजालशास्त्रोक्तक्रमेण अदृश्यरसम् उपयुज्य एतत् साधितवान्'' इति ।

## गणनामणिसाधनात् 'अनझान्'पर्यन्तम्...




गतस्य अक्टोबर्मासस्य ३१ तमे दिनाङ्के जपानदेशे क्योटोनगरे प्रवृत्ता घटना एषा । स्पर्धार्थिनः तत्र सूचिताः – '९९२.५८७३१८ इत्येषा सङ्ख्या ५६४७.७२३ इत्यनया विभाजनीया' इति । तत्र सङ्गणकयन्त्रस्य, गणनयन्त्रस्य, अन्यविधसाधनस्य वा उपलब्धिः न आसीत् । अतः सर्वे चिन्ताक्रान्ताः । मनसि एव भाजनम् आरब्धवन्तः ते । तावता त्रयोदशवर्षीयः हिरोकि त्सुचीयः इत्येषः बालकः उत्थाय अवदत् – 'सिद्धम् !' इति । सः कृष्णफलके उत्तरं लिखितवान् – '०.१७५७५०००१३२७९६-८८११५०१५०१५५५५८२६६५८' इति । जपानदेशेन गणनामणिसाधनस्य परिचयः प्राप्तः १५०० तमे क्रिस्ताब्दे । चीनादेशतः स च अंशः तेन ज्ञातः । लोहशलाकासु स्थितानां मणीनाम् इतस्ततः सञ्चालनेन गणना क्रियते स्म पूर्वम् । एतस्य उपयोगेन नैपुण्यं प्राप्य केचन मनसि एव गणनाम् आरब्धवन्तः । एषः गणनाक्रमः एव उच्यते 'अनझान्' इति । यदि अग्रे गणकसाधनस्य सङ्गणकयन्त्रस्य वा निरुपयोगिता सम्भवेत् तर्हि न तत्र आश्चर्यम् ।

# एतन्मासे जाता राष्ट्रनायिका

सरोजिनी नायुडु १८८९ तमे वर्षे फेब्रवरीमासस्य १३ दिनाङ्के हैदराबादनगरे जन्म प्राप्तवती । तस्याः काव्यप्रतिभा अपूर्वा । एकादशे एव वयसि सा कवितालेखनम् आरब्धवती । कदाचित् विद्यालये गणितकक्ष्यायां सा गणितं न अवगतवती एव । तस्याः मनसि काव्यपङ्क्तयः आवर्तन्ते स्म । अप्रयत्नेन एव काव्यधारा तस्याः अन्तरङ्गात् निर्गता ।

पिता अघोरनाथचट्टोपाध्यायः एव तस्याः प्रेरणास्रोतः । सोऽपि कविः एव । उर्दुभाषया बङ्गालीभाषया च कविताः लिखति स्म सः । तस्याः माता वरदसुन्दरीदेवी श्रेष्ठा गायिका, बङ्गालीय-टुपूकवितानां लेखिका च ।

सरोजिनीवर्यया लिखिताः कविताः अर्थर्सैमन्स्, एड्मण्ड्गोस् इत्यादिभिः प्रशंसिताः । 'दि गोल्डन् थ्रेशूहोल्ड्'नामकः तस्याः प्रथमः कवितासङ्ग्रहः विमर्शकैः बहुधा प्रशंसितः ।

यदा सा त्रयोदशवर्षीया आसीत् तदा कदाचित् ज्वरग्रस्ता जाता । वैद्येन सूचितं यत् पुस्तकम् अपि न पठनीयम् इति । किन्तु सरोजिनी तत्काले द्विसहस्रपङ्क्त्यात्मकं रूपकम् एव लिखितवती !

गृहजनानां विरोधम् अपि अपरिगणय्य सा डा॰ नायुडुवर्यं परिणीतवती १८९८ तमे वर्षे । नायुडुवर्यः अन्यराज्यीयः । हैदराबादवासतः सा मुस्लिम्जनानां जीवनम् अवगन्तुं शक्तवती । अग्रे यदा राष्ट्रियभाषावल्याम् उर्दूयोजनं न जातं तदा सा प्रबलं विरोधं प्रकटितवती । जनानां भावनायाः विरोधं सा न इच्छति स्म ।

सरोजिनीवर्या महिलाधिकारप्रतिपादने आत्मानं नियोजितवती । 'महिलाः सुशिक्षिताः यदि स्युः तर्हि एव तासां जीवनस्य परिष्कारः स्यात्' इति चिन्तयति स्म सा । महिलानां मतदानाधिकारम् अपि प्रतिपादितवती सा ।

राजकीयक्षेत्रस्य प्रवेशात् पूर्वं सा दक्षिणाफ्रिकादेशे जात्याधारितपक्षपातनीतिं विरुध्य गान्धिवर्येण आरब्धे कार्ये सहकारं दत्तवती । गोपालकृष्णगोखलेवर्यः तां राजनैतिकक्षेत्रम् आनीतवान् । १९१९ तमे वर्षे सा



## सरोजिनीनायुडु

अ. भा. होम्रूल्लीग्सदस्या सती लण्डन्नगरं गतवती । तत्र सा महिलाधिकारविषयं प्रतिपादितवती । तस्याः समाजसेवां मनसि निधाय १९०८ तमे वर्षे तस्यै 'कैसर्-इ-हिन्दु'नामिका प्रशस्तिः या दत्ता आसीत् तां सा जलियन्वालाबाग्प्रकरणावसरे प्रत्यर्पितवती ।

१९२५ तमे वर्षे कानपुरे भारतीयराष्ट्रियकाङ्ग्रेस्-अधिवेशनस्य अध्यक्षपदम् अलङ्कृतवती सा । तस्याः अध्यक्षीयभाषणेन स्वातन्त्र्यप्रियता जनेषु उद्दीपिता अभवत् । १९३० तमे वर्षे लवणसत्याग्रहावसरे तस्याः धैर्यं विनोदप्रियता च स्वयंसेवकेषु धैर्यम् उत्साहं च अपूरयत् ।

१९४२ तमे वर्षे भारतत्यागान्दोलनं निमित्तीकृत्य गान्धिवर्यः पुणेनगरे आगाखानभवने बन्धनग्रस्तः आसीत् । तदा सरोजिनीवर्या अपि तत्र आसीत् । सा तत्रत्येषु सर्वेषु उत्साहं वर्धयति स्म । राबर्ट्बेर्नी स्वस्य 'द नेकेड् फकीर्'नामके पुस्तके सरोजिनीवर्यां 'गान्धिवर्यस्य आस्थानस्य नर्मसचिवां' निर्दिष्टवान् अस्ति । गान्धिवर्यः तां 'भारतकोकिला' इति, 'भारतस्य नैटिङ्गेल्' इति च प्रशंसितवान् ।

स्वातन्त्र्यप्राप्त्यनन्तरं सा संयुक्तसंस्थानस्य (इदानीं सः उत्तरप्रदेशः इति ख्यातः) राज्यपाला जाता अनिच्छया एव । तथापि कर्तव्यपालने कामपि च्युतिं सा न कृतवती । सा १९४९ तमे वर्षे मार्च्मासस्य द्वितीये दिनाङ्के दिवं गता ।

## वेताल-कथा

# राजसम्मानः

दृढव्रती त्रिविक्रमः पुनश्च वृक्षात् शवम् अवतार्य स्कन्धे आरोप्य यथापूर्वं श्मशानं प्रति प्रस्थितवान्। तदा शवान्तर्गतः वेतालः अवदत् - ''राजन्, अस्मिन् श्मशाने स्वच्छन्दं विहरन् अस्ति खलु भवान्। स्वराज्यं प्रति गमनस्य विचारः एव किं त्यक्तः अस्ति भवता ? किं भवतः राज्ये अशान्तिः अस्ति ? तां परिस्थितिं नियन्त्रयितुं किं भवान् न शक्नोति ? अथवा समस्या पूर्णतः परिहृता इति किं चिन्तितं भवता ? मम वचनं शृणोतु तावत्। भवान् स्वराज्यं प्रतिगच्छतु। राज्ञा शन्तनुना अपि एतादृशी एव परिस्थितिः सम्मुखीकृता आसीत्। कदाचित् सः चिन्तितवान्



आसीत् यत् पूर्णरूपेण मम समस्या परिहृता इति । किन्तु तथा न आसीत् । तस्य भ्रमः आसीत् । भ्रमस्य परिहारार्थं तस्य शन्तनोः कथां शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा –

बहुप्राचीने काले शन्तनुः विदर्भदेशस्य राजा आसीत् । तदा सर्वत्र समृद्धिः आसीत् । किन्तु राज्ये मतीयवैमनस्यं बहुधा दृश्यते स्म । शिवभक्ताः विष्णुभक्ताः च लघुभिः अपि कारणैः परस्परं कलहं कुर्वन्ति स्म । परस्परं मन्दिराणां नाशं च कुर्वन्ति स्म । सम्पत्तेः दुरतिक्रमणं, व्यक्तीनां नाशनं च कुर्वन्ति स्म ।

'मतीयसङ्घर्षः एवमेव यदि अनुवर्तेत तर्हि राज्यं दुर्बलं भवेत्, शत्रुराजाः एतस्याः परिस्थितेः लाभं स्वीकर्तुं प्रयत्नं कुर्युः' इति चिन्तितवान् राजा शन्तनुः सचिवानां मतं यदा पृष्टवान् तदा शिवभक्ताः सचिवाः 'वैष्णव-सम्प्रदायस्य निषेधः करणीयः' इति सूचितवन्तः । विष्णुभक्ताः सचिवाः – 'राज्ये कुत्रापि शिवनाम्नः उच्चारणं न करणीयम्' इति उक्तवन्तः । एतस्मात् राजा अवगतवान् यत् मतीयभेदाः सचिवेषु अपि दृढरूपेण सन्ति इति । अतः तस्य चिन्ता दिने दिने प्रवृद्धा ।

शन्तनोः पत्नी विवेकवती । सा पत्युः चिन्तायाः कारणं ज्ञात्वा पृष्टवती – ''प्रभो, भवान् विष्णुभक्तः, उत शिवभक्तः ?'' इति ।

शन्तनु अवदत् – ''अहं देशभक्तः अस्मि । मम प्रजाः उभयोः अपि देवयोः पूजां कुर्वन्ति । अतः द्वौ अपि मम आराध्यदेवौ एव'' इति ।

तदा विवेकवती उक्तवती – ''अस्माकं पुराणानि सर्वदा सूचयन्ति यत् रूपभेदे सत्यपि देवः एकः एव इति । शिवस्य रूपेण विष्णोः, विष्णोः रूपेण शिवस्य च आराधनम् अस्माकं सम्प्रदायः अस्ति । एतत् सत्यं प्रतिपादयितुम् एव कुत्रचित् हरिहरमन्दिराणि अपि सन्ति । एषु दिनेषु तेषां निर्वहणे उपेक्षा क्रियमाणा अस्ति । भवान् हरिहरनाथस्य श्रेष्ठतायाः प्रचारं करोतु । प्रजाः एतं विषयं जानन्तु । तेन प्रजानां दृष्टिः परिवर्तिता भवेत्'' इति ।

एतत् श्रुत्वा शन्तनुः हसन् – ''हरिहरयोः अभेदस्य अवगमने कष्टं नास्ति । किन्तु समस्या नाम – 'केचन स्वार्थपराः मताधारेण जनान् प्रचोदयन्तः सन्ति' इति । ते मतीय-सामरस्यस्य निर्माणे अवरोधम् उत्पादयन्तः सन्ति । 'राजा धर्मद्रोही अस्ति' इत्यपि वदेयुः ते । तेन प्रजाः वृथा उद्विग्नाः भवेयुः । तदा



परिस्थितेः नियन्त्रणार्थं मया सेनाबलस्य उपयोगः करणीयः भवेत् । परिस्थितेः उपशमनार्थं हिंसामार्गस्य आश्रयणं न इच्छामि अहम् । रक्तपातः मम सिद्धान्तानां विरुद्धः अस्ति'' इति अवदत् ।

तदा विवेकवती उक्तवती – ''प्रजानां मध्ये भवता हरिहररूपेण न, अपि तु हरिहर-नाथनामकयोगिरूपेण गन्तव्यम् । जनानाम् उपदेशः करणीयः'' इति ।

''स्वार्थपूरितशक्तयः मम विरुद्धं कार्यं कुर्वत्यः सन्ति । एवं स्थिते योगिनः वचनं कः शृणुयात् ? यदा जनाः सत्यांशं जानन्ति तदा इतोऽप्यधिकः कोलाहलः भवेत्'' इति उक्तवान् शन्तनुः ।

विवेकवत्याः समीपे एतस्याः समस्यायाः अपि परिहारः आसीत् । एकदा कश्चित् मुनिः तस्याः अन्तःपुरम् आगतवान् आसीत् । सा श्रद्धया तस्य सेवां कृतवती आसीत् । गमनसमये सः अङ्गुलीयकमेकं दत्त्वा उक्तवान् आसीत् – 'यः एतत् अङ्गुलीयकं धरति तस्योपरि अस्त्रशस्त्राणां प्राकृतिकशक्त्याः वा कोऽपि प्रभावः न भवति । किन्तु एतस्य उपयोगः सत्कार्यार्थम् एव करणीयः । नो चेत् कोऽपि प्रभावः न भवति' इति । तत् स्मृत्वा विवेकवती – ''अहं योगिना दत्तम् अङ्गुलीयकम् एतावत्पर्यन्तं पूजामन्दिरे सुरक्षिततया स्थापितवती आसम् । अतः इदानीं तस्य उपयोगः प्रजामन्दिरार्थं भवतु । सः कालः इदानीं सन्निहितः अस्ति'' इति वदन्ती तत् अङ्गुलीयकम् आनीय पत्ये दत्तवती ।

तत् अङ्गुलीयकं धृत्वा राजा योगिरूपेण परिवर्तितः सन् आत्मविश्वासपूर्वकं प्रजानां मध्ये गतवान् । सः हरिहरनाथस्य प्रचारे मग्नः अभवत् । सः जनान् उपदिष्टवान् – 'शिवः भिन्नः न, विष्णुः भिन्नः न । एकस्य एव देवस्य नामद्वयम्' इति । तदा दुष्टैः प्रेरिताः जनाः पाषाणक्षेपणम् आरब्धवन्तः । ते तं बहुधा पीडितवन्तः । तथापि राजा अविचलः अतिष्ठत् । तस्य परिणामतः शीघ्रमेव जनेषु परिवर्तनं दृष्टम् । जनाः अभेदेन शिवविष्ण्वोः पूजाम् आरब्धवन्तः । अतः स्वार्थपराणाम् आशा विफला जाता । ते पराजयम् अङ्गीकृतवन्तः ।

स्वस्य जयेन शन्तनुः हृष्टः अभवत् । तन्मध्ये काचित् घटना प्रवृत्ता । यदा सः निर्जनप्रदेशे कुत्रचित् गच्छन् आसीत्, तदा



कश्चित् युवकः तस्य उपरि हठात् आक्रमणं कृतवान् । बलवान् राजा तं लीलया अधीनीकृत्य अपृच्छत् – ''अहं हरिहरनाथः अस्मि । भगवतः कृपया काश्चन शक्तयः मया स्वाधीनीकृताः सन्ति । अहं योगी अस्मि । वास्तविकतया अज्ञानेन भवान् मम उपरि आक्रमणं कृतवान् । तथापि भवतः विषये मम द्वेषः नास्ति । तदस्तु, भवान् किमर्थं मम उपरि आक्रमणं कृतवान् ?'' इति ।

तदा सः युवकः तिरस्कारदृष्ट्या शन्तनुं पश्यन् – ''राजन्, भवान् कः, भवतः लक्ष्यं किम् इत्यादिकम् अहं सम्यक् जानामि । योगद्वारा सिद्धिः प्राप्तुं शक्या । तासां सिद्धीनां उपयोगेन जनाः सन्मार्गे प्रवर्तयितुम् अपि शक्याः । किन्तु भवान् आत्मना प्राप्तानां सिद्धीनां दुरुपयोगं स्वीकुर्वन् अस्ति । अस्माकं राज्ये या अराजकता प्रसृता अस्ति तस्याः कारणं – दैवभक्तिः । भवान् जनेषु ताम् एव दैवभक्तिनामिकां मूर्खतां वर्धयन् अस्ति । एषः भवतः जयः न, अपि तु पराजयः'' इति अवदत् ।

एतत् श्रुत्वा शन्तनुः अवदत् – ''अस्मिन् विश्वे स्थिताः बहवः आस्तिकाः एव । दैवभक्तिः नाम कश्चन विशिष्टः विश्वासः । सर्वत्र विश्वे दैवभक्त्याः नाम्ना बहूनि सत्कार्याणि प्रचलन्ति । दैवभक्तिः यदा मूढभक्तिरूपेण परिणमति तदा जनानां मनसि विद्यमाना मानवीयता दूरं गच्छति इति तु सत्यम् । अतः अहं विश्वसिमि यत् – एतादृशसमये सन्मार्गे तेषाम् आनयनमेव अस्माकम् आद्यं कर्तव्यं भवति इति । तत् न केवलं मम कर्तव्यम्, अपि तु लक्ष्यमपि तदेव । एतेन विश्वासबलेन एव अहं प्रचारं कृतवान् । अहमिव भवान् अपि यदि प्रचारं करिष्यति तर्हि महान् लाभः स्यात्'' इति ।

तदा सः युवकः स्वरचितं काव्यमेकं शन्तनुं श्रावितवान् । ततः अत्यन्तं सन्तोषेण शन्तनुः उक्तवान् – ''भवता उत्कृष्टं काव्यं रचितम् अस्ति । भवान् एतत् राजानं श्रावयति चेत् सः भवतः सम्माननं कुर्यात्'' इति ।

ततः द्वौ अपि भिन्नभिन्नमार्गेण गतवन्तौ । राजधानीं प्रति प्रत्यागत्य शन्तनुः पत्न्यै अङ्गुलीयकं प्रत्यर्पितवान् । एकदा सः राजसभायां सिंहासने विराजमानः आसीत् । तदा सः नास्तिकः युवकः तत्र आगतवान् । सः राज्ञः अनुमतिं स्वीकृत्य सभायां स्वस्य काव्यं श्रावितवान् । सभासदः प्रशंसापूर्वकं



करताडनं कृतवन्तः । शन्तनुः अपि प्रशंसां कुर्वन् अवदत् - ''वत्स, भवान् निश्चयेन कश्चित् प्रतिभावान् कविः । भवतः काव्यं दशसहस्त्रसुवर्णनाणकानां पारितोषिकम् अर्हति'' इति ।

तदा सचिवः अवदत् - ''महाराज, एतस्य युवकस्य काव्यम् उत्कृष्टम् इत्यत्र नास्ति संशयः । किन्तु अस्मिन् भगवतः निन्दा-वचनानि सन्ति । एषः भगवन्तमेव दोषिणं भावयति कुत्रचित् । अस्मद्देशीयाः आस्तिकाः एतं विचारं न अङ्गीकुर्युः । एतस्य पठनेन तेषां मनसः दुःखस्य वर्धनं भवेत् । अतः एतस्य काव्यस्य सम्माननं न उचितम्'' इति ।

शन्तनुः सचिवस्य तर्कं समर्थयन् इव शिरः चालयन् तं युवकम् एकान्ते मेलितुम् असूचयत् । यदा युवकः एकान्ते मिलितः तदा शन्तनुः अवदत् - ''निःसन्देहं भवतः काव्यम् उत्तमम् अस्ति । भवान् स्वस्य विचारान् विश्वासपूर्वकं यदि प्रचारयितुम् इच्छति तर्हि अहं मम सिद्धिं भवते आनन्देन दास्यामि । किन्तु, एकं स्मरतु यत् तस्य उपयोगः उत्तमकार्यार्थमेव भवेत्, न तु स्वार्थाय'' इति ।

युवकः अनङ्गीकारपूर्वकं शिरः चालयन् अवदत् - ''सर्वे योगिनः भवितुं न अर्हन्ति । लोकोपकारेण मम कः लाभः ? एतादृशानि बहूनि काव्यानि रचयितुम् इच्छामि । अत्र मम काव्यस्य राजादरः यदि स्यात् तर्हि अनेकानि काव्यानि रचयितुं शक्नुयाम् । परिश्रमेण एव यदि जीवनं करणीयं तर्हि मया काव्यरचना विस्मर्तव्या स्यात्'' इति ।

तदा शन्तनुः तस्मै एकं चित्रं यच्छन् उक्तवान् - ''नगरस्य आभरणवणिजे रत्नाकराय एतत् चित्रं ददातु । सः भवते



पारितोषिकरूपेण दशसहस्रं सुवर्णनाणकानि दद्यात् । पुनः काव्यानि लिखित्वा मम समीपम् आगच्छतु । तावता अपरं चित्रं लिखितवान् भविष्यामि । किन्तु रत्नाकरेण न ज्ञातव्यं यत् मया लिखितम् एतत् इति'' इति ।

एतत् श्रुत्वा आश्चर्यं प्रकटयन् युवकः पृष्टवान् – ''महाराज, स्वकीयं चित्रं विक्रीय एव किमर्थं धनं दातुम् इष्यते भवता ? किं भवतः धनकोषः रिक्तः ? कवीनां कलाविदां च सम्माननकरणपद्धतिः किं भवतः देशे नास्ति ?'' इति ।

तदा शन्तनुः हसन् उक्तवान् – ''कवीनां कलाविदां च सम्माननपद्धतिः मम देशे अस्ति एव । किन्तु देशः राज्ञः एकस्य एव न, अपि तु प्रजानाम् अपि । प्रजाप्रतिनिधिः सन् अहं प्रजानां निर्णयम् अङ्गीकृतवान्, पालितवान् च । भवतः काव्यानि जनैः न अङ्गीकृतानि । अतः भवान् राजसम्माननस्य अर्हः न । भवतः काव्यानि मह्यं नितराम् अरोचन्त । अतः विरामसमये मया यत् कार्यं कृतं ततः प्राप्तेन धनेन अहं भवतः सम्माननं कुर्वन् अस्मि । रत्नाकरः कलाप्रियः । सः एतादृशानि चित्राणि बहु इच्छति । राज्ञा एतानि लिखितानि इति यदि जानीयात् तर्हि सः एतस्मै चित्राय अधिकं मूल्यं दद्यात् । अहं तस्य चित्रस्य योग्यं मूल्यम् इच्छामि । अतः अहं मम नाम गोपयितुम् इष्टवान्'' इति ।

तदा सः युवकः बद्धाञ्जलिः अवदत् – ''महाराज, राजानः एतादृशाः आदर्शप्रियाः भवन्ति इति मया कल्पना अपि न कृता आसीत् । नास्तिकः सन् अपि अहं भवति भगवन्तं पश्यन् अस्मि । इतः परम् अहं सम्माननस्य अपेक्षां कदापि न करिष्यामि । इतः परं भवान् एव मम आदर्शभूतः'' इति ।

शन्तनुः युवकस्य स्कन्धे स्नेहपूर्वकं हस्तं स्थापयन् अवदत् – ''जनाः मूर्खतायाः प्रवाहे निमग्नाः यथा न भवेयुः तथा कर्तुं भवतः काव्यानाम् आवश्यकता अस्ति । भवादृशस्य सम्माननं यदि कर्तुं न शक्नोमि, तर्हि किं मम जीवितेन ? भवतः कला लोकोपकाराय भवतु । मम कला भवतः काव्यरचनायाः प्रेरिका भवतु । एतत् चित्रं निस्सङ्कोचं नयतु । रत्नाकरः अनुरोधपूर्वकं पृच्छति चेत् अपि भवान् मौनेन तिष्ठतु । मम नाम्नः उच्चारणं सर्वथा न करोतु'' इति ।

युवकः नम्रतापूर्वकम् उक्तवान् – ''प्रभो,

सभायां महाराजेन सता अपि भवता मम सम्माननं कर्तुं न शक्तं चेदपि एतादृशः सम्माननप्रस्तावः कृतः यत् तत् तु महते सन्तोषाय । भवतः मार्गदर्शनपूर्वकवचनैः सूचनाभिः च अहं प्रेरितः अस्मि । मम जीवने परिवर्तनम् आनीय जीवनपथे अग्रे गमिष्यामि । मम पूर्णः विश्वासः अस्ति यत् एकदा निश्चयेन भवतः सभायां भवद्द्वारा सम्मानितः भविष्यामि इति'' इति ।

वेतालः एवं कथां श्रावयित्वा - ''राजन्, राज्यशासनं नाम असिधाराव्रतम् इव । राज्ये विविधविश्वासयुक्ताः जनाः भवन्ति । तेषु परस्परकलहः अत्यन्तं सहजः । राज्ञा एतादृशसमस्याः सर्वदा सम्मुखीकरणीयाः भवन्ति इति तु सर्वविदितमेव । एतादृशानां विषये राज्ञा कठोरः निर्णयः स्वीकरणीयः भवति । आवश्यकतायां सत्यां दुष्टानां कठिनं दण्डनम् अपि करणीयम् । किं मधुरवचनैः तेषु परिवर्तनम् आनेतुं शक्यम् ? शक्यं भवेत् चेदपि सः विजयः क्षणिकः स्यात् । एतादृशाः यदा कदापि अविश्वासं प्रदर्शयेयुः । विद्रोहमपि आचरेयुः । तादृशतात्कालिकविजयेषु एव विश्वस्य शन्तनुः अन्यथा चिन्तितवान् खलु ? अहं तु चिन्तयामि यत् तथा चिन्तनं तस्य भ्रमः इति । एषा तु आत्मवञ्चना खलु ? मम एतेषां सन्देहानां परिहारं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः शतधा भग्नं भवेत्'' इति अवदत् ।

तदा त्रिविक्रमः अवदत् - ''मानवसमाजः चेतनारहितः परिवर्तनहीनः वा न । परिणामः परिवर्तनं च तस्य सहजलक्षणम् । अतः तत्तत्कालीनां परिस्थितिं मनसि निधाय एव राज्ञा व्यवहारः करणीयः भवेत् । तदा एव समस्याः परिहृताः भवन्ति, परस्परविवादाः च अपगच्छन्ति । विवेकी शन्तनुः तथैव आचरितवान् । दण्डनं समस्यापरिष्कारकं न भवति इति जानन् सः तस्य युवकस्य दण्डनविचारं परित्यक्तवान् । व्यक्तिषु, मतेषु च भेदाः सहजाः । समस्यायाः शाश्वतपरिहारः भवेत् इति चिन्तनं भ्रममात्रम्'' इति ।

एवं राज्ञः मौनभञ्जने सफलः वेतालः पुनश्च शवसहितः अदृश्यः भूत्वा वृक्षे लम्बमानः अतिष्ठत् ।





# भाग्यवान्

गोपालपुरनामके कस्मिंश्चित् लघुग्रामे राधेशः नाम कश्चन वणिक् वसति स्म । भाग्यवर्मा तस्य पुत्रः । पुत्रस्य जननस्य अनन्तरं राधेशस्य वाणिज्ये विशेषवृद्धिः जाता आसीत् । किन्तु भाग्यवान् यावत् प्राप्त-वयस्कः जातः तावता राधेशस्य सौभाग्यं विनष्टम् । राधेशस्य पत्नी आकस्मिकमरणं प्राप्तवती । समुद्रवाणिज्यार्थं प्रेषिताः तदीयाः नौकाः समुद्रे निमग्नाः । पार्श्वनगरं प्रति वाणिज्यार्थं प्रेषितानि वस्तूनि लुण्ठाकैः लुण्ठितानि । एतस्मात् राधेशः महतीं हानिम् अनुभूतवान् । मानसिकम् आघातं प्राप्य सः व्याधिग्रस्तः जातः ।

स्वस्य मरणात् पूर्वं सः पुत्रं भाग्यवर्माणम् आहूय - ''वत्स ! भवतः जन्मानन्तरं मम वाणिज्ये महती वृद्धिः जाता । अतः एव भवतः नाम भाग्यवर्मा इति कृतं मया । किन्तु इदानीं दौर्भाग्यं बाधते अस्मान् । सर्वं नष्टम् अस्ति अस्माकम् । भगवता अस्माकं विषये किमर्थम् एवं निर्दयः व्यवहारः कृतः इत्येव अवगन्तुं न शक्नोमि । एवं भाति यत् मम मरणदिनानि सन्निहितानि इति । भवन्तम् अनाथरूपेण त्यक्त्वा अहं मरणं प्राप्स्यामि इति भाति । भवतः भविष्यं चिन्तयामि चेत् मम दुःखं भवति । किन्तु अहं किं वा कर्तुं शक्नोमि ? अहम् असहायः अस्मि'' इति अश्रुपूर्णनेत्रः अवदत् ।

पितुः सान्त्वनं कुर्वन् भाग्यवर्मा - ''नारिकेले यथा जलम् उत्पन्नं भवति तथा सम्पत् अपि आगच्छति । अस्मासु पश्यत्सु एव कदाचित् सा सम्पत् अदृश्यतां प्राप्नोति । यदा झञ्झावातः भवति, सस्यानां नाशः च यदा भवति, तदा कृषिकाः हानिम् अनुभवन्ति । हानिं विचिन्त्य कृषिकाः

वरुणदेवाय, भूदेव्यै च कुप्यन्ति चेत्, कृषिं विना मौनं तिष्ठन्ति चेत् च कथं जीवनं प्रचलेत् ? कथं कुटुम्बपोषणं भवेत् ? वाणिज्ये हानिः भवति चेत् वणिजा हताशेन मौनेन न स्थातव्यम् । तेन पुनश्च प्रयत्नः करणीयः । भवता प्रीत्या 'भाग्यवर्मा' इति मम नामकरणं कृतम् । नामानुगुणम् अहम् अस्मि वा न वा इति कालः एव सूचयिष्यति । सफलतां प्राप्तुं भवान् माम् आशीर्वादेन अनुगृह्णातु, तावदेव'' इति अवदत् ।



राधेशः पुत्रस्य आत्मविश्वासयुक्तं वचनं श्रुत्वा प्रसन्नः सन् उक्तवान् - ''मया यत् वाणिज्यं कृतं तदेव भवता अपि करणीयम् इति नास्ति । आरम्भे अहं, लघुनौकया यानि वस्तूनि आगच्छन्ति स्म तेषां विक्रयकर-स्वीकरणस्य कार्यं कुर्वन् आसम् । मम मित्रेण चक्रधरेण मिलतु । सः एव मां तस्मिन् उद्योगे नियोजितवान् आसीत् । भवते अपि सः उद्योगं दापयेत् । निःसङ्कोचं तत् कार्यं भवान् करोतु । मम आत्मा सदैव भवतः समीपे स्थास्यति'' इति ।

राधेशस्य मरणानन्तरं भाग्यवर्मा चक्र-धरेण मिलितवान् । चक्रधरस्य बह्व्यः लघु-नौकाः आसन् । वाणिज्यस्य वस्तूनि अन्यान्यस्थानानि प्रापयितुं, विक्रेतुं च तासां नौकानाम् उपयोगः क्रियते स्म । विक्रयणानुगुणं करः स्वीक्रियते स्म । कर-स्वीकरणार्थमेव केचन नियुक्ताः आसन् तेन ।

चक्रधरः मित्रस्य पुत्रं भाग्यवर्माणं प्रीत्या अवलोकमानः - ''मया अत्र यः लाभः प्राप्तः तेन कतिचन नौकाः क्रीताः । भवतः पित्रा अपि एवं कृत्वा एव वाणिज्यस्य आरम्भः कृतः । अग्रे सः उत्तमः वणिक् सन् कोटिशः रूप्यकाणि सम्पादितवान् । भवान् तु मम मित्रस्य पुत्रः । अतः भवते तादृशम् उद्योगं दापयितुं न इच्छामि । अहं भवते ऋणरूपेण किञ्चित् धनं ददामि । तेन धनेन भवान् वाणिज्यं करोतु, धनं सम्पादयतु च । गतवैभवं पुनः प्राप्नोतु । अहं प्रतिक्षणं भवतः साहाय्यं करिष्यामि'' इति अवदत् ।

भाग्यवर्मा चक्रधरं प्रणम्य - ''ज्येष्ठैः उक्तम् अस्ति यत् - यत्र यत् नष्टं तत् तत्रैव अन्वेष्टव्यम् इति । अहं पितुः वचनं पालयितुम् इच्छामि । मम पितुः वचनम् एव मम मूलधनम् । मम विश्वासः अस्ति यत् - यम् उद्योगं मम पिता कृतवान्, तस्मिन् एव उद्योगे मम भाग्यं विकसितं भवेत् इति ।



तमेव उद्योगं मह्यं दापयतु । उद्योगमेव ऋणं भावयामि अहम् । भवतः मित्रस्य अपि सा एव इच्छा आसीत्'' इति अवदत् ।

भाग्यवर्मणः इच्छानुसारं चक्रधरः तस्मै उद्योगं दत्तवान् । केचन मासाः अतीताः । कदाचित् नौकायां तिस्रः पेटिकाः आसन् । तस्य स्वामी पेटिकाः उद्घाटितवान् । भाग्य-वर्मणे दर्शयन् सः अवदत् – ''महोदय, एताः रिक्तपेटिकाः । अतः एतासां निमित्तं करदानस्य आवश्यकता नास्ति इति भाति'' इति ।

भाग्यवर्मा पेटिकाः सम्यक् परिशील्य – ''प्रत्येकस्यां पेटिकायां त्रिंशत्किलोमितानि वस्तूनि पूरयितुं शक्यम् । एतासां पेटिकानां विक्रयणं कृतं चेत् अपि धनार्जनं भवितुम् अर्हति । अतः करः दातव्यः एव'' इति अवदत् ।

तदा पेटिकानां स्वामी दीनस्वरेण उक्तवान् – ''कृपया मम विज्ञप्तिं परिशीलयतु । बहुपूर्वं वाणिज्यार्थं वणिजां कश्चन गणः अरण्य-मार्गेण गच्छन् आसीत् । तस्मिन् गणे अहं तु कश्चन सामान्यः सेवकः आसम् । अरण्ये केचन लुण्ठाकाः अस्मान् लुण्ठितवन्तः । प्राणापायम् अपि अविगणय्य अस्माभिः तैः सह सङ्घर्षः कृतः । किन्तु प्रयोजनं न अभवत् । अहं मूर्च्छितः सन् एकत्र पतितवान् आसम् । गर्दभस्य उपरि आरोपिताः पेटिकाः अस्तव्यस्तरूपेण पतिताः आसन् । मया सर्वत्र परिशीलितम् – कुत्रापि मूल्यवत् वस्तु लभ्यते वा ? इति । तत्र एताः पेटिकाः लब्धाः । मार्गे मया वणिग्भिः सह सम्भाषणावसरे ज्ञातं यत् पेटिकाः गोपालपुरस्य वणिजः राधेशस्य इति । अहम् एताः राधेशाय प्रत्यर्पयितुं गच्छन् अस्मि । प्रतिफलरूपेण सः मह्यम् उद्योगं दद्यात् इत्यपि आशा अस्ति । पेटिकानां विक्रयणस्य विचारः मम सर्वथा नास्ति'' इति अवदत् ।

तस्य वचनं श्रुत्वा भाग्यवर्मणः आनन्दः अभवत् । पितुः पेटिकाः पुनः प्राप्ताः आसन् तेन । पुनश्च मम जीवने भाग्यरेखायाः उदयः भवेत् इति चिन्तयन् सन्तुष्टः अभवत् सः । अतः सः तां व्यक्तिम् उद्दिश्य – ''अहं तस्य राधेशस्य एव पुत्रः । भवतः निष्कपटता मह्यं नितराम् अरोचत । अद्य आरभ्य भवतः योगक्षेमदायित्वं मम । भाग्यं मदनुकूलं यदि भविष्यति तर्हि पुनश्च वाणिज्यस्य आरम्भं करिष्यामि । भवन्तं मम सेवकं करिष्यामि'' इति अवदत् ।

पेटिकाः स्वीकृत्य भाग्यवर्मा चक्रधरसमीपं गत्वा - ''यद्यपि एतेन युवकेन उक्तं यत् 'एताः पेटिकाः भवतः पितुः' इति, तथापि भवतः अनुमतिं विना अहं पेटिकाः स्वायत्तीकर्तुं न इच्छामि । भवान् एव सूचयतु - मया किं करणीयम् इति'' इति ।

चक्रधरः पेटिकाः सम्यक् परिशील्य हर्षोद्गारं प्रकटयन् - ''अहो, भवतः पितुः आत्मा सदैव भवतः साहाय्यं कुर्वन् भवति इति तु सत्यमेव । तेन उक्तं सत्यमेव अभवत् । सुवर्णवत् प्रकाशमानानि कृतक-आभरणानि भवतः पिता निर्माति स्म । तानि विक्रेतुं सः पेटिकाः कारितवान् आसीत् । पश्यतु, प्रतिपेटिकं त्रीणि गोलकानि सन्ति । लक्ष्मी-देव्याः कृपां प्राप्तुं सुवर्णं पूजयित्वा पेटिकासु योजितवान् आसीत् सः । गोलकस्य उपरि आवृतां धूलिम् अपसारयतु । तानि गोलकानि एव पेटिकाः रक्षित्वा भवतः समीपम् आगतानि सन्ति । भगवान् भवन्तम् अनुगृह्णातु'' इति अवदत् ।

भाग्यवर्मा गोलकानि निष्कासितवान् । तदा स्पष्टम् अभवत् यत् गोलकानि सुवर्ण-निर्मितानि इति । तदा चक्रधरः अवदत् - ''भवतः पितुः कथनानुसारमेव प्रवृत्तम् । यस्मात् स्थानात् भवान् वाणिज्यम् आरब्धुम् इच्छति तत्र एव भवता पेटिकाः प्राप्ताः सन्ति । एतत् सुवर्णमेव भवतः मूलधनम् । पिता इव भवान् अपि वाणिज्यम् आरभताम्'' इति ।

भाग्यवर्मा आनन्दितः सन् - ''मम पित्रा आशीर्वादपूर्वकं कथितम् अस्ति यत् मम आत्मा सर्वदा भवता सह भवति इति । सेवकरूपेण पेटिकाभिः सह मम पिता आगतवान् अस्ति । पितुः नाम्ना एव वाणिज्यस्य आरम्भं करोमि । भाग्यं निश्चयेन मदनुकूलम् अस्ति'' इति अवदत् ।

भाग्यवर्मणा वाणिज्यम् आरब्धम् । द्वित्रेषु वर्षेषु एव सः प्रमुखः वणिक् अभवत् । चक्रधरः भाग्यवर्मणः वाणिज्यकौशलेन बहुधा प्रभावितः सन् स्वपुत्र्याः विवाहं भाग्यवर्मणा सह निर्वर्तितवान् ।

भाग्यवर्मा पितुः नाम्ना सेवकस्य सम्माननं कृतवान् । ततः उभौ अपि सौभाग्यकारणतः सुखेन जीवनं यापितवन्तौ ।



# ११. सावित्र्याः साहसमयं जीवनम्



सः रविवासरः । अतः देवनाथवर्यः चिन्तयति स्म यत् परिवारजनैः सह कुत्रचित् पर्वतीयप्रदेशं गत्वा मनोविनोदः प्राप्तव्यः इति । यावत् सः गमनार्थं सिद्धः जातः तावता अनेके बालाः दूरवाण्या पृष्टवन्तः – ''आर्य ! वयं सावित्रीकथां श्रोतुं कदा कुत्र आगच्छेम ?'' इति । संस्कृतिः ज्ञातव्या इत्येतत् तेषां कुतूहलं ज्ञातवतः देवनाथवर्यस्य महान् आनन्दः जातः । अतः सः सङ्कल्पितवान् – 'प्रवास-कार्यक्रमः व्याक्षेप्तव्यः' इति । स्नुषा ससन्तोषम् एव एतं प्रस्तावम् अङ्गीकृतवती ।

अपराह्णे त्रिवादने सर्वे बालाः सन्दीपस्य गृहे उपस्थिताः । तमालवृक्षस्य अधः आसन्दः स्थापितः । देवनाथवर्यः तस्मिन् उपविश्य उक्तवान् – ''पौराणिकेषु आख्यानेषु सावित्रीकथा प्रमुखा । सावित्री मद्रदेशस्य राज्ञः अश्वपतेः पुत्री । मद्रदेशः कुत्र आसीत् इति किं भवन्तः जानन्ति ?'' इति ।

''अद्य 'चेन्नै'नाम्ना व्यवह्रियमाणे मद्रास्-नगरप्रदेशे स्यात्'' इति उक्तवती किशोरस्य भगिनी ।

''न वत्से ! अद्य अफगानिस्थानम् इति यः प्रदेशः उच्यते सः पूर्वं मद्रदेशः आसीत् । प्राचीनः गान्धारदेशः अद्य 'कान्धारः' इति कथ्यते'' इति अवदत् देवनाथवर्यः ।

''एवम् ! तर्हि ते अपि भागाः पूर्वं भारतस्य अङ्गभूताः आसन् किम् ?'' – किशोरः अपृच्छत् ।

''आम् । पूर्वं भारतं सुविशालम् आसीत् । प्राचीनभारतस्य भौगोलिकं राज-नैतिकं च स्वरूपं ज्ञातं चेत् एतम् अंशम् अवगन्तुं शक्नुमः वयम् । पूर्वं भरतखण्डः जम्बूद्वीपस्य अङ्गम् आसीत् । जम्बूद्वीपे अनेकानि राज्यानि आसन् । सांस्कृतिकः आध्यात्मिकः च सम्बन्धः एतेषां राज्यानाम्

# गौरव-गाथा



अखण्डतां कल्पयति स्म । अतः एव कौरव-पाण्डवयुद्धं यदा आरब्धं तदा केचन कौरवाणां, पुनः केचन पाण्डवानां च पक्षम् अवलम्ब्य युद्धं कृतवन्तः । पेशावर, काबूल्, बामियन् इत्यादिषु देशेषु विद्या-केन्द्राणि आसन् । बामियन्प्रदेशे बुद्धस्य महामूर्तयः बह्व्यः आसन् । चेन्दिसखानादयः दुराक्रमणकारिणः बह्वीः मूर्तीः निर्दयं नाशितवन्तः । इतिहासस्य पठनात् एतादृशाः बहवः अंशाः ज्ञायन्ते । तदस्तु, मया इदानीं सावित्र्याः कथा खलु श्रावणीया ? पाण्डवानां वनवासस्य काले मार्कण्डेयमुनिः एतत् आख्यानम् ऐदम्प्राथम्येन पाण्डवान् श्रावितवान्'' इति उक्त्वा देवनाथवर्यः कथाम् आरब्धवान् -

सावित्री मद्रदेशस्य अधिपतेः अश्वपत्रेः एकमात्रपुत्री । देव्याः सावित्र्याः अनुग्रहात् उत्पन्ना सा अनुपमसुन्दरी ।

सा सद्गुणानां खनी अपि आसीत् । तस्याः मुखे अपूर्वं तेजः सर्वदा विराजते स्म ।

यदा सा विवाहयोग्या जाता तदा राजा अश्वपतिः वरान्वेषणम् आरब्धवान् । ये राजकुमाराः तां द्रष्टुम् आगतवन्तः तेषु कोऽपि तस्याः तेजोमयं मुखमण्डलं द्रष्टुं न शक्तः । यतः तावत् सामर्थ्यं तेषु न आसीत् । अतः अश्वपतिराजः चिन्तितवान् यत् मम पुत्री योग्यं पतिं स्वयम् अन्विष्यतु इति ।

विवेकिभिः मन्त्रिभिः सह सुन्दरे रथे उपविश्य सावित्री विविधानि राज्यानि प्रति प्रस्थितवती । अन्ते सा साल्वराज्यं प्राप्तवती । (तत् इदानीं 'रजपुताना'नाम्ना निर्दिश्यते ।) तत्र सा साल्वराजस्य द्युमत्सेनस्य पुत्रं सत्यवन्तं दृष्टवती । द्युमत्सेनः कदाचित् आकस्मिकतया यदा अन्धत्वं प्राप्तवान् तदा शत्रवः तस्य राज्यं स्वायत्ती-कृतवन्तः आसन् । अतः सः अरण्ये मुनिभिः सह वसति स्म । सत्यवान् मातापितृभ्यां सह वसन् तयोः सेवां करोति स्म ।

'सत्यवान् एव परिणेतव्यः' इति निश्चित्य सावित्री स्वनिश्चयं मातापितरौ श्रावयितुं मद्रपुरीं प्रत्यागता । राजभवने नारदः तया मिलितः । सः अवदत् - ''सत्यवान् अल्पायुः । इतः वर्षस्य अनन्तरं तस्य मरणं भविष्यति । तत् निवारयितुं केनापि न शक्यते'' इति । एतत् श्रुत्वा सावित्री, तस्याः मातापितरौ च चिन्ताक्रान्ताः जाताः ।

''सत्यवतः परिणयेच्छां परित्यजतु भवती'' इति पुत्रीं बोधितवान् अश्वपतिः ।



कः ?' इति चिन्तयन्ती अन्ते सा निश्चितवती – 'यथाकथञ्चित् धैर्येण व्यवहरन्त्या मया पत्युः प्राणाः रक्षणीयाः एव' इति ।

अतः सा सदा ध्यानमग्ना सती स्वस्य शक्तिं वर्धितवती । नारदेन सूचितं मरणदिनं सन्निहितम् ।

तस्मिन् दिने सत्यवान् समिधः आनेतुम् अरण्यं प्रति प्रस्थितवान् । सावित्री अपि तस्मिन् दिने तम् अनुसृतवती । मध्याह्नसमये सत्यवान् शिरोभ्रमणं प्राप्य सावित्र्याः अङ्के शिरः निधाय शयनं कृतवान् । अग्रे किं भवेत् इति सावित्री ऊहितवती । सा भगवतः ध्यानं कुर्वती निश्चलतया उपविष्टवती ।

अल्पे एव काले एकम् उग्रं रूपं तस्याः पुरतः प्रत्यक्षं जातम् । उपस्थितः तु यमराजः । सः सत्यवतः प्राणान् गृहीत्वा ततः प्रस्थितवान् ।

किन्तु सावित्री एतत् न अङ्गीकृतवती एव । सा दृढस्वरेण उक्तवती – 'यदि अहं परिणीता स्यां तर्हि सत्यवता एव' इति ।

अश्वपतिः पुत्र्याः सङ्कल्पदृढतां जानाति स्म । तस्याः सामर्थ्यातिशयम् अपि जानाति स्म । अतः सः सावित्री-सत्यवतोः विवाहं निर्वर्तितवान् ।

सावित्री पत्या सह अरण्ये कुटीरे वासम् आरब्धवती । महत्या श्रद्धया श्वश्रू-श्वशुरयोः सेवां करोति स्म सा । तस्याः व्यवहारेण, विनयोपेतव्यवहारेण च श्वश्रूश्वशुरौ नितरां सन्तुष्टौ ।

यद्यपि सावित्री शान्ता इव दृश्यते स्म, तथापि तस्याः मनः सर्वदा अशान्तं भवति स्म । 'प्राणसमस्य पत्युः रक्षणं कथम् ? तं विना मम जीवनं शून्यप्रायं भवेत् । मरण-सम्भावना तु निश्चिता । अत्र परिहारोपायः

सावित्री यमम् अनुसृतवती । तस्याः अपूर्वं सामर्थ्यं दृष्ट्वा यमः आश्चर्यचकितः । एतादृशीं पतिव्रतां दृष्ट्वा सः सन्तुष्टः अपि । सः ताम् अवदत् – ''किमर्थं भवती मम पृष्ठतः आगच्छति ? पत्युः प्राणेभ्यः ऋते, यत् इच्छति तत् पृच्छतु भवती । ततः प्रतिगच्छतु च'' इति ।

सावित्री श्वशुरस्य दृष्टिशक्तिं, हस्तच्युतस्य राज्यस्य प्रतिप्राप्तिं च प्रार्थितवती । यमः अङ्गीकारं सूचितवान् । तथापि सावित्री यमस्य अनुसरणं न परित्यक्तवती । तदा दयार्द्रहृदयः यमः उक्तवान् – 'पुनः वरद्वयं प्रार्थयतु' इति । सावित्री प्रार्थितवती – 'अहम् आजीवनं पतिव्रता स्याम्, मम सन्तानप्राप्तिः स्यात्' इति । यमराजः झटिति अङ्गीकारं

सूचितवान् ।

सत्यवान् जीवेत् चेदेव तस्याः प्रार्थना पूर्णा स्यात् । अतः यमः सत्यवतः प्राणान् प्रत्यर्पितवान् । सावित्र्याः सामर्थ्यातिशयस्य कारणतः एतत् सिद्धम् ।

निद्रातः इव सत्यवान् मन्दम् उत्थितवान् । उभौ अपि मिलित्वा कुटीरं गतवन्तौ । द्युमत्सेनः पुत्रं स्नुषां च दृष्ट्वा सन्तोषातिरेकं प्राप्य आशीर्वादं कृतवान् । तावता तेन दृष्टिशक्तिः अपि प्राप्ता आसीत् । बलात् सिंहासनं वशीकृतवन्तं दुष्टराजं प्रजाः मारितवत्यः । मन्त्रिणः द्युमत्सेनं राजधानीं नेतुम् उपस्थिताः ।

महाभारते उक्तायाः सावित्रीकथायाः सङ्क्षेपः एषः । गुणदृष्ट्या एषा कथा विशेष-महत्त्वम् अर्हति । सावित्री आत्मशक्तिबलेन पत्युः भाग्यं परिवर्तितवती । सत्यवान् अन्वर्थनामा आसीत् । उभयोः अपि दम्पत्योः स्वभावः पवित्रः आसीत् । तयोः चरित्रं श्रेष्ठम् आसीत् । यदि अरविन्दवर्यः 'सावित्री'महाकाव्यं रचितवान् न स्यात् तर्हि एतस्य कथानकस्य गूढार्थः प्रायः प्रकाशितः न अभविष्यत् । अरविन्दवर्यः पुरातनीं कथां महोन्नतप्रतीकस्तरं प्रापितवान् ।

निर्मलप्रेम्णा एकः अन्यस्य ललाटरेखाम् अपि परिवर्तयितुम् अर्हति । एतस्मात् प्रेमशक्तेः सामर्थ्यं स्पष्टं भवति । यदि दिव्यप्रेम विकसितं स्यात् तर्हि समग्रस्य मानवसमूहस्य एव हितं सिद्धं भवेत् । मनुष्यः सत्यमार्गेण गच्छन् प्रगतेः उन्नतशिखरं प्राप्तुं प्रयत्नं कुर्यात् । एतत् कदापि न विस्मर्तव्यम् अस्माभिः ।''

''आर्य ! यदि भवान् सावित्रीकाव्यं श्रावयेत् तर्हि वरं स्यात्'' इति उक्तवती एका बालिका ।

''यदा भवती प्रौढा भविष्यति तदा तं ग्रन्थं स्वयं पठित्वा अर्थम् अवगच्छतु । अथवा इदानीम् एव तस्य पठनस्य आरम्भं करोतु । यद्यपि अर्थबोधः सद्यः न भवेत् तथापि भाविपरिणामदृष्ट्या इदानीम् एव पठनस्य आरम्भः वरम् । ततः अपूर्वः अनुभवः प्राप्यते । श्रेष्ठा कविता कीदृशी इति ज्ञातं भवति'' इति वदन् आसनात् उत्थितवान् देवनाथवर्यः ।





# बिन्दुसारस्य चित्रलेखनम्

बिन्दुसारस्य जन्म कस्मिंश्चित् निर्धनकुटुम्बे जातम् आसीत् । सः धनिकः भवितुं विशेषतः इच्छति स्म । अतः आदिनं परिश्रमं कृत्वा सः बहु धनं सङ्गृहीतवान् । सः दुर्व्यसनेभ्यः बहुदूरे आसीत् । न केवलं तावत्, अनावश्यकव्ययमपि न करोति स्म सः । अतः तस्य समीपे वाणिज्यं कर्तुं पर्याप्तमात्रेण धनं सङ्गृहीतम् अभवत् । ततः सः लघुप्रमाणेन वाणिज्यम् आरब्धवान् । क्रमशः तस्य वर्धनं कुर्वन् महता प्रमाणेन वाणिज्यं विस्तारितवान् सः । एवं दश-वर्षाभ्यन्तरे सः कोट्यधिपतिः अभवत् । तस्य द्वौ पुत्रौ, एका पुत्री अपि आसीत् ।

सः योग्ये काले पुत्र्याः विवाहं निर्वर्तितवान् । द्वयोः पुत्रयोः विवाहः अपि सम्पन्नः । वाणिज्यनिर्वहणं तौ एव कुरुतः स्म । एतां स्थितिं प्राप्तुं बिन्दुसारेण महान् प्रयत्नः कृतः आसीत् । तथाऽपि सः कार्यं विना स्थातुं न इच्छति स्म । कार्यरहितः सः अशान्तिम् अनुभवति स्म । वाणिज्ये अपि आसक्तिः न आसीत् तस्य । अतः सः निश्चितवान् यत् ललितकलानाम् अभ्यासः करणीयः इति ।

कविताः लेखनीयाः अथवा श्रावणीयाः चेत् भाषाज्ञानम् आवश्यकं भवति । किन्तु बिन्दुसारस्य भाषाज्ञानम् अत्यन्तम् अल्पम् आसीत् । गीताभ्यासं कर्तुं तस्य कण्ठस्वरः उत्तमः न आसीत् । अन्ते एकः एव मार्गः अवशिष्टः आसीत् - चित्रलेखनं नाम ।

एकदा बिन्दुसारः स्वप्रकोष्ठे उपविश्य कतिचन चित्राणि रचितवान् । एकमपि चित्रं तस्य तृप्त्यै न जातम् । सः चिन्तितवान् यत् कार्यसिद्ध्यै साधना, एकाग्रता, तपस्या च आवश्यक्यः इति । अतः सः सप्ताहं यावत् निरन्तरं प्रयत्नं कृतवान् । अन्ते सः सिंहस्य

चित्रं रचितवान् । महता परिश्रमेण निर्मितं तत् चित्रं दृष्ट्वा सः आनन्दतुन्दिलः अभवत् । 'भविष्ये अहम् उत्तमः चित्रकारः भूत्वा प्रसिद्धिं प्राप्स्यामि' इति चिन्तितवान् सः ।

'अन्ये एतस्याः कलाकृतेः प्रशंसां कुर्वन्ति चेदेव मम तृप्तिः' इति चिन्तयन् सः इतरेषाम् अभिमतं ज्ञातुम् इष्टवान् । 'मया लिखितं चित्रं कथम् अस्ति ?' इति प्रष्टुं तस्य सङ्कोचः अभवत् । अतः सः मौनम् आश्रितवान् ।

तेन सम्यक् अवगतम् आसीत् यत् जनाः चित्रं दृष्ट्वा मिथ्याप्रशंसाम् एव कुर्युः, मम अनुपस्थितौ उपहसेयुः च इति । चित्रस्य विषये सम्यक् निर्णयः ज्ञातव्यः चेत् जनैः 'किं चित्रम् ? कः चित्रकारः ?' इत्यादिकं न ज्ञातव्यम् इति आलोच्य बिन्दुसारः स्वस्य चित्रं गृहस्य मध्यभागे एकस्याम् उत्पीठिकायां स्थापितवान् । अनन्तरं घोषितवान् यत् अस्मिन् कागदे विद्यमानं चित्रं यः अभिजानाति तस्मै शतं रूप्यकाणि पुरस्काररूपेण दीयन्ते इति ।

प्रथमं बिन्दुसारस्य पत्नी कागदं दृष्ट्वा - ''पौत्रेण लिखिताः वक्ररेखाः स्युः'' इति उक्तवती । पत्न्याः विमर्शं श्रुत्वा बिन्दुसारः दुःखितः अभवत् । किन्तु कथञ्चित् आत्मनिग्रहं कृतवान् सः । अनन्तरं पुत्राभ्याम् उक्तम् - ''एतादृशनिरर्थकविषये चिन्तनं परित्यज्य वाणिज्ये दृष्टिः केन्द्रीकरिष्यते चेत् अधिकं सम्पादयितुं शक्नुमः'' इति । पुत्रयोः अभिमतं श्रुत्वा बिन्दुसारस्य दुःखम् इतोऽपि वर्धितम् अभवत् ।

ज्येष्ठा स्नुषा उक्तवती - ''कश्चित् अत्र सन्देशं लिखित्वा स्थापितवान् इति भाति । अक्षराणि असुन्दराणि अस्पष्टानि च सन्ति । अतः निश्चयेन एषा पैशाचिकी भाषा स्यात्'' इति । कनीयसी स्नुषा एतत् निराकुर्वती - ''कागदे कोऽपि वर्णान् पातितवान् अस्ति ।



मम दृष्ट्या अत्र कापि भाषा नास्ति । अक्षराणि अपि न सन्ति'' इति ।

बिन्दुसारस्य स्थितिः अत्यन्तं शोचनीयतां गता । सः न रोदनं कर्तुं शक्नोति, न वा हसितुम् । सः गम्भीरस्वरेण उक्तवान् – ''शत-रूप्यकाणां पुरस्कारं प्राप्तुं समर्थः कोऽपि अत्र नास्ति इति भाति'' इति ।

तावता तस्य द्वौ सेवकौ तत्र आगतौ । तयोः एकः तत् कागदं दृष्ट्वा अवदत् – ''बीजानां पुटिकां कर्तुं कोऽपि एतत् कागदम् उपयुक्तवान् स्यात् । बीजानां स्पर्शेन एतस्मिन् कागदे वर्णः संलग्नः स्यात्'' इति ।

अपरः सेवकः हसन् अवदत् – ''भवतः मूर्खतां दृष्ट्वा हासः आगतः मम । यदि बीजानां पुटिकारचनार्थम् एतत् उपयुक्तं स्यात् तर्हि पुटीकरणस्य चिह्नानि भवेयुः खलु । अत्र तादृशं चिह्नं सर्वथा न दृश्यते'' इति ।

तयोः वचनं श्रुतवतः बिन्दुसारस्य मनसि किञ्चिदिव आशा उत्पन्ना । सः द्वितीयं सेवकम् उद्दिश्य – ''द्वयोः भवान् किञ्चित् बुद्धिमान् इति भाति । भवान् एव वदतु – तत् किम् इति'' इति अवदत् ।

तदा सेवकः आनन्देन – ''स्वामिन्, किम् अहं तावत् अपि वक्तुं न शक्नोमि ? कागदे किञ्चित्कालं बीजानि स्थापितानि आसन् । अनन्तरं निष्कासितानि, तावदेव । पुटिका न कृता'' इति उक्तवान् ।

निराशः बिन्दुसारः – ''अलं व्यर्थ-वार्तालापनेन । गत्वा स्वकार्यं पश्यतु'' इति तं तर्जितवान् ।

सेवकयोः ततः निर्गमनस्य अनन्तरं तस्य पञ्चवर्षीयः पौत्रः तत्र आगतवान् । कागदं दृष्ट्वा सः बालः – ''पितामह, पश्यतु । कश्चित् सुन्दरं वृक्षं लिखितवान् अस्ति । मम एतत् चित्रम् आवश्यकम्'' इति उक्तवान् ।

पौत्रस्य वचनं श्रुत्वा बिन्दुसारः अत्यन्तम् आनन्दितः अभवत् । पौत्रं प्रीत्या उन्नीय लालयन् – ''सिंहं वृक्षत्वेन कथनेन का हानिः ? अस्मिन् कागदे रेखाभिः निर्मितं चित्रम् अस्ति इति कथयिता भवान् एकः एव । अतः मया घोषितस्य पुरस्कारस्य अधिकारी भवान् एव'' इति उक्तवान् । तत्रैव स्थिताः तस्य पत्नी-स्नुषादयः सशब्दं हसितवत्यः । यतः ताभिः सत्यांशः ज्ञातः आसीत् ।



# विंशतितमे शतके भारतम्

## स्वायत्तसर्वकारतः स्वर्णिमस्वातन्त्र्यान्तम् - १९२३ - १९५०

१९२३ तमे वर्षे मे-मासे नागपुरे त्रिवर्णध्वजं गृहीत्वा गच्छतः शोभायात्रागतान् काङ्ग्रेस्-जनान् आरक्षकाः कारागारे स्थापितवन्तः । जुलैमासे १८ दिनाङ्के समग्रदेशे ध्वजदिनम् आचरणीयम् इति निर्णीतम् । अग्रे सर्वकारेण निषेधः प्रतिस्वीकृतः ।

देहल्यां प्रवृत्तस्य काङ्ग्रेस्पक्षस्य विशेषाधिवेशनस्य अध्यक्षः आसीत् - मौलाना अब्दुल् कलाम अझाद्वर्यः । तत्र निर्णीतं यत् यः कोऽपि काङ्ग्रेसीयः स्वसामर्थ्यबलात् राज्यसभा-निर्वाचनस्य अभ्यर्थी भवितुं स्वातन्त्र्यम् अर्हति इति । 'सर्वकारस्य सर्वाणि जनविरोधीनि कृत्यानि अवरोद्धुम् असहकारान्दोलनम् एकः एव उपायः' इत्यपि तत्र निर्णीतम् ।



मौलाना-अझादः

१९२४ तमे वर्षे नायकानां मनसि भावः आगतः यत् स्वातन्त्र्यार्थं कार्यं कुर्वत्सु पक्षेसु परस्परसहकारभावः नास्ति इति । अतः गान्धिवर्यः स्वराजपक्षस्य नायकैः सह, ये च काङ्ग्रेस्पक्षतः पृथग्भूताः आसन् अभिप्रायभेदकारणतः, समालोच्य परस्परसहकारेण सर्वैः कार्यं करणीयम् इति सानुरोधं प्रतिपादितवान् । असहकारान्दोलनं स्थगनीयम् इति तत्र निर्णीतम् ।

अग्रे बेळगाँव्-अधिवेशनस्य आध्यक्ष्यं निर्वहन् गान्धिवर्यः प्रतिपादितवान् यत् असहकारान्दोलनं, शासननियमभङ्गान्दोलनं च 'कल्पवृक्षस्य' शाखाद्वयायते इति । हिन्दु-मुस्लिम्-ऐक्यं, पाननिरोधः, अस्पृश्यतानिवारणं च साधनीयम् इति सर्वानुमततया तत्र निर्णीतम् ।

# समग्रस्वातन्त्र्यम् अभ्यर्थ्य...



सरोजिनी नायुडु

१९२५ तमे वर्षे डिसेम्बर्मासस्य २६ तमे दिनाङ्के प्रवृत्तस्य काङ्ग्रेस्पक्षस्य ४० तमस्य अधिवेशनस्य अध्यक्षा आसीत् श्रीमती सरोजिनी नायुडु । 'स्वातन्त्र्यसङ्ग्रामे भीति-सन्देहादीनाम् आस्पदं नास्ति' इति वदन्ती सा जनान् प्रबोधितवती यत् स्वातन्त्र्यरूपं लक्ष्यं साधयितुं जनैः अग्रे आगन्तव्यम् इति ।

ततः अचिरात् एव, तन्नाम १९२६ तमे वर्षे, अखिलभारतीयं महाविद्यालयविद्यार्थिसम्मेलनं प्रवृत्तम् । तत्र निर्णीतं यत् सर्वैः सर्वकारीयशैक्षणिकसंस्थाः बहिष्करणीयाः इति । असहकारान्दोलने भागग्रहणाय ये विद्यालयगमनं परित्यक्तवन्तः, येषाम् अध्ययनं मध्ये स्थगितं, तेषां निमित्तं स्वायत्ताः विद्यालय-महाविद्यालयाः आरम्भणीयाः इत्यपि तत्र निर्णीतम् ।

१९२७ तमे वर्षे मद्रास्नगरे प्रवृत्ते अधिवेशने जवहरलालवर्येण उपस्थापितः प्रस्तावः अनुमतः यत् – पूर्णस्वातन्त्र्यप्राप्तिपर्यन्तं विरतिः सर्वथा न स्यात् इति । आधिकारिकतया प्रस्तावरूपेण उपस्थापिता प्रथमा अभ्यर्थना एषा । मिण्टोमोर्लिसन्धेः क्रियान्वयनं कथं प्रचलति इति द्रष्टुम् आगतायाः भारते प्रवासं कुर्वत्याः सैमन्-मण्डल्याः बहिष्कारः करणीयः इत्यपि तत्र जनाः बोधिताः ।

१९२८ तमे वर्षे देहल्यां सर्वपक्षसमावेशः प्रवृत्तः । तत्र निर्णीतं यत् स्वतन्त्रदायित्वोपेतसर्वकारस्य निर्माणार्थं भारतेन स्वस्य संविधानं रचनीयम् इति । संविधानस्य प्रारूपं रचयितुं मोतिलालनेतृत्वयुक्ता समितिः अपि नियुक्ता । तया एकं प्रारूपं सज्जीकृतम् । किन्तु तत् प्रारूपं सर्वैः अनुमतम्, ऋते मुस्लिंलीग्पक्षात् । तस्य पक्षस्य अध्यक्षः एम्. ए. जिन्हः अभ्यर्थितवान् यत् मुस्लिम्-जनसमुदायस्य कृते कानिचन संसदीय-क्षेत्राणि आरक्षणीयानि इति ।



एम्. ए. जिन्हः

किन्तु एषा अभ्यर्थना तस्यां सभायां तिरस्कृता जाता । भारतेन अधीनस्थितिः अङ्गीकरणीया इत्येतं प्रस्तावं केचन काङ्ग्रेस्नायकाः निराकृतवन्तः । गान्धिवर्यः तु तं प्रस्तावम् अनुमतवान् । जवहरलालनेहरू, सुभाश्चन्द्रबोस् इत्यादयः पूर्णस्वातन्त्र्यम् एव अभ्यर्थितवन्तः ।

१९२८ तमे वर्षे स्वातन्त्र्यसङ्ग्रामस्य नूतनः वेगः आगतः । गुजरातराज्यस्य बार्डोली-ग्रामस्य कृषिकाः वल्लभभायीपटेलस्य नेतृत्वे करदानं निराकृतवन्तः । ते करसङ्ग्राहकेभ्यः अधिकारिभ्यः आहारस्य सञ्चारानुकूल्यस्य च दानम् अपि निराकृतवन्तः । सर्वकारजनाः तेषां चरसम्पत्तिं भूम्यादिसम्पत्तिं च स्वायत्ती-कृतवन्तः । करसङ्ग्रहप्रक्रिया-विषये पुनश्चिन्तनं क्रियते इति सर्वकारेण यदा वचनं दत्तं तदा कृषिकाः स्वस्य विरोधस्य तीव्रतां न्यूनीकृतवन्तः ।


वल्लभभायीपटेलः

१९२९ तमे वर्षे डिसेम्बर्मासस्य ३१ तमे 'दिनाङ्के काङ्ग्रेस्पक्षस्य ४४ तमम् अधिवेशनं लाहोर्नगरे प्रवृत्तम् । जवहरलाल-नेहरूवर्यः तस्य आध्यक्ष्यं निरूढवान् । तस्मिन् अधिवेशने जवहरलालवर्यः भारतस्य स्वातन्त्र्यम् उद्घोषितवान् । मध्यरात्रे त्रिवर्णध्वजः उड्डायितः अपि । 'आंग्लानां बन्धनतः भारतं विमुक्तं स्यात्' इति जवहरवर्यः उक्तवान् । जनवरीमासस्य २६ तमः दिनाङ्कः स्वातन्त्र्यदिनत्वेन स्वीकरणीयः इति तत्र निर्णीतम् ।

# प्रपञ्चस्य अन्येषु भागेषु....



- १९२५ तमे वर्षे अक्टोबर्मासस्य द्वितीये दिनाङ्के दूरदर्शनस्य आविर्भावः जातः । जान् लागी बियार्ड्वर्यः चलन्ति चित्राणि निश्चितदूरे स्थापितायाः जवनिकायाः उपरि पुनः दर्शयितुं शक्तवान् तस्मिन् दिने ।



- चार्ल्स् लिण्ड्बर्ग्नामकः १९२७ तमे वर्षे मे-मासस्य २१ दिनाङ्के न्यूयार्कतः प्यारिस्पर्यन्तम् एकयन्त्रोपेतेन 'स्पिरिट् आफ् सेण्ट्लुयिस्'नामकेन विमानेन ३६०० मैल्दूरम् एकाकितया निरन्तर-प्रयाणं (३३ १/२ घण्टाः) कुर्वन् आकाशयानक्षेत्रस्य इतिहासे नूतनम् अध्यायम् एव लिखितवान् ।

# असहकारान्दोलनस्य आरम्भः

१९३० तमे वर्षे फेब्रवरीमासे साबरमति-प्रदेशे प्रवृत्तायां काङ्ग्रेस्पक्षीय-व्यवस्थापक-मण्डलीगोष्ठ्यां निर्णीतं यत् असहकार-आन्दोलनम् आरब्धव्यम्, गान्धिवर्यः तस्य नायकत्वं निर्वहेत् इति । गान्धिवर्यस्य



अपेक्षानुगुणं लवणसत्याग्रहः आरब्धः । मार्च्-मासस्य १२ दिनाङ्के ७८ अनुयायिभिः सह साबरमती-आश्रमतः २०० मैल्दूरे स्थितं दाण्डीं प्रति पादयात्रा आरब्धा । २४ दिनानाम् अनन्तरं, तन्नाम एप्रिल्मासस्य ६ दिनाङ्के, गान्धिवर्यः तदनुयायिनः च दाण्डीं प्राप्तवन्तः । तत्र, समुद्रेण यत् लवणं निश्शुल्कं दीयते तस्य सङ्ग्रहविषये विहितं करं विरुध्य समुद्रतीरे लवण-सङ्ग्रहणेन शासन-नियमस्य विरोधः प्रकटितः । ततः मासस्य अनन्तरं गान्धिवर्यः कारागारे स्थापितः ।



नवम्बर्मासस्य १२ दिनाङ्के लण्डन्नगरे प्रवृत्तं प्रथमं वर्तुलोत्पीठिकासम्मेलनं (रौण्ड् टेबल् कान्फरेन्स्) काङ्ग्रेस्पक्षेण बहिष्कृतम् । 'शासनसभायां मुस्लिम्समुदायस्य $^1/_3$ प्रातिनिध्यं स्यादेव' इति मुस्लीम्लीग्पक्षस्य प्रतिनिधिः जिन्हावर्यः अभ्यर्थितवान् । हिन्दु-महासभया एषा अभ्यर्थना खण्डिता ।

राजप्रतिनिधिः लार्ड् डार्विन्, महात्मा गान्धिः इत्येतयोः मध्ये यः सन्धिः जातः तदनुगुणम् असहकारान्दोलनं प्रतिस्वीकृतम् । शासनेन वचनं दत्तं यत् प्रतिरोधात्मकानि सर्वाणि पदानि स्थग्यन्ते इति ।

१९३१ तमे वर्षे गान्धिवर्यः काङ्ग्रेस्-प्रतिनिधित्वेन लण्डन्नगरे प्रवृत्तं द्वितीय-वर्तुलोत्पीठिकागोष्ठीं प्रति गतवान् । सर्वकारेण उक्तं यत् सामाजिकपरिष्काराः जाताः चेदेव स्वायत्तसर्वकारस्य स्थापनविषये चिन्तयिष्यते इति । किन्तु गान्धिवर्यः प्रतिपादितवान् यत् स्वायत्तसर्वकारस्य स्थापनार्थं सामाजिक-परिष्कारस्य प्रतीक्षा करणीया नास्ति इति ।

१९३२ तमे वर्षे जनवरीमासे अधिकार-स्थानम् आगतः नूतनः राजप्रतिनिधिः लार्ड् विल्लिङ्ग्टनः चतस्रः आज्ञाः घोषितवान् । तस्य परिणामतः कर्मविरामान्दोलन-सत्याग्रहादयः उद्यमाः निषिद्धाः जाताः । गान्धि-इर्विन्-सन्धिः अपि शक्तिहीनः जातः । अतः गान्धिवर्यः पुनरपि असहकारान्दोलनस्य आरम्भम् उद्घोषितवान् । अतः सर्वकारेण काङ्ग्रेस्पक्षस्य अमान्यता घोषिता । देशस्य विविधेषु भागेषु चतुश्शताधिकाः काङ्ग्रेस्-नायकाः कारागारे स्थापिताः ।



- १९३० तमे वर्षे भारतीयः भौत-शास्त्रज्ञः सि. वि. रामन्वर्यः आत्मना अन्विष्टस्य 'रामन्परिणामस्य' निमित्तं भौतशास्त्रक्षेत्रीयं नोबेल्पारितोषिकं प्राप्तवान् । एतत् महत्त्वपूर्णं पारितोषिकं प्राप्तवत्सु सः एव समग्रे एषियाखण्डे प्रथमः ।

# प्रपञ्चस्य अन्येषु भागेषु....

- १९२८ तमे वर्षे सप्टेम्बर्मासे न्यूयार्क्-नगरे 'मिकि मौस्'सम्बद्धं ध्वनिसहितं विनोदचित्रोपेतं चलच्चित्रं प्रदर्शितम् अभवत् । इतःपूर्वं सज्जीकृतम् एतादृशं चित्रद्वयं चित्रवितारकाणाम् अवधानस्य आकर्षणे असमर्थं जातम् आसीत् ।



- अलेक्साण्डर्फ्लेमिङ्गः पेन्सिलिन्-औषधस्य अन्वेषणं कृतवान्, यच्च व्रणचिकित्सायां विशेषोपकारकं जातम् । (१९२८)



- *'वण्डर्ल्याण्ड'*स्था अलिस्-ग्रन्थस्य मूलप्रतिकृतिः १५,४०० डालर्मूल्येन विक्रीता अभवत् । (१९२८)

# ऐदम्प्राथम्येन संस्थानेषु शासनसभा...

१९३३ तमे वर्षे मे-मासे गान्धिवर्यः आमरणोपवाससत्याग्रहम् आरब्धवान् कारागारे। एतत् २१ दिनानि यावत् प्रवृत्तम्। तदनन्तरं सः असहकारान्दोलनस्य प्रति-स्वीकरणं द्वितीयवारम् उद्घोषितवान्। कारागारात् बहिः आगतः सः अवदत् - ''हरिजनपदेन निर्दिश्यमानानाम् अन्त्यजानाम् उद्धारार्थं मम प्रयत्नाः इतःपरं भविष्यन्ति'' इति।


जयप्रकाशनारायणः

१९३४ तमे वर्षे मे-मासे पाटनानगरे प्रवृत्ते काङ्ग्रेस्-अधिवेशने समाजवादप्रियाः केचन पार्थक्येन सभाम् आयोज्य 'काङ्ग्रेस्-सोषलिस्ट्-पक्षम्' आरब्धवन्तः। एतेन पक्षेण भारतस्य पूर्णस्वातन्त्र्यं प्रतिपादितम्। सांविधानिक-संसदः व्यवस्थापनं, समाजवादावलम्बितं सामाजिकं परिवर्तनं चापि तेन अभिलषितम् आसीत्।

अक्टोबर्मासे मुम्बयीनगरे काङ्ग्रेस्पक्षस्य ४८ तमम् अधिवेशनं यदा प्रवृत्तं तदा गान्धिवर्यः पक्षाय स्वस्य त्यागपत्रं समर्पित-वान्। नवेम्बर्मासे प्रवृत्ते सेण्ट्रल्-लेजिस्लेटिव्-कौन्सिल्-निर्वाचने काङ्ग्रेस्पक्षेण बहुमतं प्राप्तम्।

१८३६ तमे वर्षे लखनऊनगरे प्रवृत्ते काङ्ग्रेस्-अधिवेशने अध्यक्षपदम् अलङ्कुर्वन् भाषमाणः जवहरलालनेहरूवर्यः अवदत् यत् श्रमिकसङ्घानां कृषिकसङ्घटनानां चापि सदस्यता स्यात् पक्षस्य इति। वामपक्षीय-सदस्यानां महान् गणः तस्मिन् अधिवेशने उपस्थितः आसीत्। जयप्रकाशनारायणः, अच्युतपटवर्धनः इत्यादयः युव-समाजवादि-नायकाः व्यवस्थापकमण्डल्याम् अन्तर्भावम् अवाप्नुवन्।

१९३७ तमे वर्षे येषु संस्थानेषु निर्वाचने अधिकस्थानानि प्राप्तानि तेषु काङ्ग्रेस्पक्षेण मन्त्रिमण्डलम् आरचितम्। आहत्य यानि १५५५ स्थानानि आसन् तेषु ७१५ स्थानेषु काङ्ग्रेस्पक्षेण जयः प्राप्तः, मुस्लीलीग्पक्षेण च १२३ स्थानानि प्राप्तानि। संयुक्तसंस्थानेषु जवहरलालवर्यस्य भगिनी विजयलक्ष्मी-पण्डितवर्या प्रथमा सम्पुटस्तरीयसचिवा सती स्वास्थ्य-विभागस्य दायित्वं स्वीकृतवती। अक्टोबर्मासे वार्धानगरे प्रवृत्ते सम्मेलने अध्यक्षपदम्


विजयलक्ष्मीपण्डित

अलङ्कुर्वन् गान्धिवर्यः नूतनशिक्षानीतिम् उपस्थापितवान् । एतत् उद्योगकेन्द्रित-शिक्षणस्य, भारतीयपरम्परायाः अध्ययनस्य च प्राधान्यं ददत् 'मूलभूतशिक्षणम्' इति ख्यातम् अभवत् । तन्नीत्यवलम्बितः प्रथमः विद्यालयः वार्धानगरे एव आरब्धः ।

पञ्चशताधिकेषु संस्थानेषु काङ्ग्रेसीयाः लघुगणान् विरचय्य यदा कार्यम् आरब्धवन्तः तदा राष्ट्रियान्दोलनेन विशेषगतिः प्राप्ता । आंग्लसर्वकारे निष्ठां दर्शयतां केषाञ्चित् राज्यानां प्रमुखाः तादृशगणानाम् उपस्थितिं न असहन्त । मैसूरु-ट्रावणकोर्-प्रभृतीनां राज्यानां राजानः काङ्ग्रेस्पक्षीयान् नायकान् हिंसात्मकतया बहुधा दण्डितवन्तः । काङ्ग्रेस्-नायकाः बहवः आरक्षकाणां प्रहारं प्राप्य कारागारं प्रविष्टवन्तः । तत्रापि तैः घोर-दण्डनानि प्राप्तानि । तेषु राज्येषु काङ्ग्रेसीयानां विषये प्रदर्शितः नृशंसव्यवहारः १९३८ तमे वर्षे हरिपुरे प्रवृत्ते काङ्ग्रेस्-अधिवेशने खण्डितः । राज्यगणेभ्यः पूर्णसहकारः दातव्यः इति जवहरलालनेहरूवर्यः प्रति-पादितवान् ।

- १९३३ तमवर्षस्य जनवरीमासस्य अष्टमः दिनाङ्कः संस्मरणीयं दिनम्, यतः तस्मिन् दिने काङ्ग्रेस्पक्षेण सानुरोधम् अभ्यर्थितः देवालये सर्वहिन्दूनां प्रवेशः अनुमतः जातः ।

# प्रपञ्चस्य अन्येषु भागेषु....



- जर्मनीदेशेन सज्जीकृता 'झेपेलिन्'-नामिका गगननौका २१ दिनानि यावत् प्रपञ्चपर्यटनम् अकरोत् । (१९२९)
- अमेरिकीयः खगोलशास्त्रज्ञः क्लैड् तोम्बौगः 'प्लुटो'नामकस्य नवमस्य ग्रहस्य उपस्थितिम् अन्विष्टवान् ।
- डान् ब्राडमनः एकस्मिन् क्रीडापर्याये ४५२ धावनाङ्कान् सम्पादयन् अपि बाह्यताम् अप्राप्नुवन् विश्वविक्रमं साधितवान् । सः क्वीन्स्ल्याण्डं विरुध्य न्यू-सौत्-वेल्स्पक्षस्य प्रतिनिधित्वेन ४१५ निमेषान् यावत् क्रीडन् ४९ चतुष्कोपेतान् धावनाङ्कान् अर्जितवान् । (१९३०)

- १९२४ तमे वर्षे क्लैटोन् एफ्. सम्मिवर्येण 'हेपी बर्त् डे टु यू' इत्येतत् गीतं रचितम् ।
- गर्द्रूड् एडल्वर्या आंग्लकुल्यां तरणेन अतिक्रान्तवती प्रथमा महिला इति ख्यातिं प्राप्तवती । (१९२६)

# काङ्ग्रेस्-नायकत्वविषये मतभेदः

काङ्ग्रेस्पक्षे ऐदम्प्राथम्येन अध्यक्षपद-प्राप्त्यर्थं स्पर्धा आरब्धा । गान्धिनेतृत्वयुतः गणः पट्टाभि-सीताराम-वर्यस्य नाम असूचयत् । वामवादिनां प्रोत्साहं प्राप्य सुभाश्चन्द्रः अभ्यर्थित्वेन स्वनाम दत्त-वान् । बहुमतं प्राप्य सः जितवान् । 'एषः मम वैयक्तिक-पराजयः' इति गान्धिवर्यः अमन्यत ।



सुभाश्चन्द्रबोसः

१९३९ तमे वर्षे मार्च्मासे त्रिपुराराज्ये ५२तमम् अधिवेशनं प्रवृत्तम् । तत्र गान्धिवर्ये पूर्णविश्वासः प्रदर्शितः । कार्यनिर्वाहक-समित्याः सदस्यानां चयने गान्धिवर्यः मार्गदर्शनं कुर्यात् इत्येषः निर्णयः तत्र कृतः । एतत् अध्यक्षे कृतम् अविश्वासप्रदर्शनम् इति सुभाश्चन्द्रपक्षसमर्थकाः अभिप्रेतवन्तः । स्वातन्त्र्येण व्यवहर्तुं न शक्यते अत्र इति यदा अवगतं तदा सुभाषवर्यः अध्यक्षपदार्थं त्यागपत्रं समर्प्य 'फार्वर्ड् ब्लाक्'नामकं पक्षं स्थापितवान् । सः काङ्ग्रेस्पक्षतः बहिष्कृतः अभवत् ।

सप्टम्बर्मासे आरब्धस्य द्वितीयजागतिक-युद्धस्य परिणामतः स्थानीयसर्वकारान् सर्वान् राजप्रतिनिधिः (वैसराय्) अधिकारात् प्रच्यावितवान् । एतस्मिन् युद्धे भारतेन ब्रिटन्-देशस्य साहाय्यं करणीयम् इति सूचितम् । तदा काङ्ग्रेस्कार्यकारिसमितिः उक्तवती यत् युद्धकारणतः भारतीयानां जीवनं कियता प्रमाणेन आकुलितं भवति इति स्पष्टीकृतं चेदेव युद्धे ब्रिटन्देशस्य साहाय्यं चिन्त्यते इति । भारतस्य स्वातन्त्र्यं शीघ्रम् एव उद्घोषणीयम्, अल्पसङ्ख्याकानां हितं च उपेक्षितं न स्यात् इति तया समित्या उक्तम् ।

युद्धारम्भस्य वर्षानन्तरं काङ्ग्रेस्पक्षेण 'शीघ्रातिशीघ्रं मध्यकालिकः सर्वकारः स्थापनीयः' इत्येषा अभ्यर्थना पुनः उच्चारिता । 'यदि एषा अभ्यर्थना न पुरस्क्रियते तर्हि असहकारान्दोलनं पुनः आरभ्यते' इति विभीषिका अपि दर्शिता । किन्तु गान्धिवर्यः जवहरलालः च निर्णीतवन्तौ यत् यदा ब्रिटन्देशः युद्धे निरतः भवति तदा असहकारान्दोलने जनानां प्रवृत्तिः न शोभते इति ।

राजप्रतिनिधिः लार्ड् लिन्लिथ्गोवर्यः काङ्ग्रेस्पक्षाय आश्वासनं दत्तवान् यत् युद्धं यदा समाप्यते तदा भारतस्य संविधानस्य रूपणार्थं दायित्वोपेतसमितेः रचना करिष्यते इति ।

सप्टेम्बर्मासे बोम्बेनगरे प्रवृत्तायां काङ्ग्रेस्-समितिसभायां गान्धिवर्यः अवदत् यत्


विनोबाभावे

समूहविरोधं न्यूनीकृत्य वैयक्तिकस्तरे 'सत्याग्रह'नाम्ना असहकारस्य प्रदर्शनम् एव वरम् इति । सभया एषः प्रस्तावः अङ्गीकृतः । विनोबाभावेवर्यः सर्वप्रथमः सत्याग्रही भवतु इति गान्धिवर्यः असूचयत् । वर्धासमीपस्थात् पनवारतः विनोबावर्यः पदयात्रायाः आरम्भं कृतवान् । पदयात्रायाः चतुर्थे दिने सः निगृहीतः । जवहरलालवर्यः तु सत्याग्रहारम्भतः पूर्वम् एव कारागारे स्थापितः । एवम् एव वल्लभभायीपटेलः, सि. राजगोपालाचारी, मौलाना अब्दुल् कलाम अजादः इत्यादयः अनेके नायकाः अपि कारागारे स्थापिताः ।

- सर्वकारीयकेन्द्रं १९३१ तमे वर्षे नूतनतया निर्मितां नवदेहलीं प्रति नीतम् ।
- भारतस्य प्रथमः चित्रमयः मूल्याङ्कः (षट्सङ्ख्यात्मकः) नूतनराजधान्याः शुभारम्भं निमित्तीकृत्य नवदेहल्यां प्रकाशितः ।

# प्रपञ्चस्य अन्येषु भागेषु....

- व्यङ्ग्यचित्राणि, चित्रकथाः च यद्यपि दिनपत्रिकासु तदा तदा दृश्यन्ते स्म, तथापि चित्रकथामयं समग्रं पुस्तकं तु १९३९ तमे वर्षे ऐदम्प्राथम्येन प्रकाशितम् । ६८ पुटात्मकस्य तस्य नाम आसीत् - 'फेमस् फन्नीस्' इति ।



- प्रपञ्चे एव अतिदीर्घत्वेन ख्याता 'गोल्डन् गेट् ब्रिज्'नामिका दोलायमाना सेतुः स्यान्फ्रान्सिस्कोनगरे यातायातार्थम् उद्घाटिता । (१९३७)
- बर्मादिशः (इदानीन्तनं नाम 'मायन्मार्' इति) भारतात् पृथग्भूतः १९३७ तमे वर्षे ।
- बर्नार्ड् फौस्टस्वर्यः १९३७ तमे वर्षे ऐदम्प्राथम्येन रक्तनिधेः (Blood Bank) स्थापनं कृतवान् । (Blood Bank इत्येषः शब्दः तेनैव चितः ।)

# भारतीयस्वातन्त्र्यसङ्ग्रामस्य प्रोत्साहः

गृहबन्धने स्थापितः सुभाषश्चन्द्रबोसः १९४१ तमवर्षस्य जनवरीमासस्य १७ दिनाङ्के कारागारात् पलाय्य छद्मवेषं धृत्वा पेशावरं गत्वा ततः काबूल्-मास्कोनगर्यौ अतिक्रम्य बर्लिन्नगरं प्राप्तवान् । तत्र सः स्वतन्त्रभारतकेन्द्रं संस्थापितवान् । तस्य केन्द्रस्य सैन्यविभागस्य नाम 'भारतसैन्यम्' इति । अस्माद् हिन्द्-आकाशवाणीकेन्द्रतः सन्देशप्रसारम् अपि आरब्धवान् सः ।

भारतेन क्रियमाणा स्वातन्त्र्याभ्यर्थना, स्वातन्त्र्यप्राप्त्यर्थं तेन अवलम्बितः अहिंसामार्गश्च जगति सर्वत्र वार्ताविषयः जातः । १९४२ तमे वर्षे भारतम् आगतः चीनादेशस्य अध्यक्षः चियाङ्ग् कै शेक्वर्यः ब्रिटन्सर्वकारं बोधितवान् यत् भारताय अधिकारदानं श्रेयसे इति । अमेरिकाध्यक्षः फ्राङ्कलिन् रूसवेल्टः ब्रिटिष्प्रधानमन्त्रिणे चर्चिल्वर्याय तन्त्रीसन्देशं प्रेषयन् उक्तवान् यत् भारते तात्कालिकसर्वकारः स्थापनीयः, तस्य पार्थक्येन अस्तित्वं च अङ्गीकरणीयम् इति । ब्रिटिष्संसदि एव बहवः सदस्याः उक्तवन्तः यत् भारते यथाशीघ्रं राष्ट्रिय-सर्वकारः संस्थापनीयः इति ।

मुम्बयीनगरे प्रवृत्तं काङ्ग्रेस्-अधिवेशनं निर्वाहकसमितेः प्रस्तावम् अङ्गीकृत्य निरणयत् यत् शीघ्रातिशीघ्रं भारतं त्यक्तव्यम् इति ब्रिटिष्सर्वकारः सूचनीयः, सामूहिकविरोधः आरम्भणीयः, गान्धिवर्यस्य नेतृत्वे पूर्णविश्वासः स्थापनीयः च इति । गान्धिवर्यः अगस्ट्मासस्य नवमे दिनाङ्के 'भारतं त्यज्यताम्' इति उद्घोषितवान् । एषः उद्घोषः अचिरात् एव भारतस्य कोणे कोणे प्रतिध्वनितः जातः । एकरात्र्यभ्यन्तरे देशस्य बहवः नायकाः आंग्लेयैः कारागारे स्थापिताः । सङ्घर्षमयं वातावरणं सर्वत्र प्रसृतम् ।

कारागारे वसन् एव गान्धिवर्यः स्वस्य अभ्यर्थनाः पौनःपुन्येन राजप्रतिनिधिम् अभियाचितवान् । किन्तु सर्वकारपक्षतः आशादायकः प्रतिस्पन्दः यदा कोऽपि न दृष्टः तदा गान्धिवर्यः (१९४३ तमे वर्षे फेब्रवरीमासे) २१ दिनात्मकं निराशनव्रतम् आरब्धवान् । तस्य देहस्थितिः दिने दिने शोचनीयतां गता । राजनैतिकक्षेत्रम् अप्रविष्टाः अपि बहवः प्रसिद्धपुरुषाः 'गान्धिवर्यस्य, अन्यनायकानां च विमोचनं वरम्' इति आंग्ल-सर्वकारं प्रार्थितवन्तः । राजप्रतिनिधेः कार्यनिर्वाहकसमितेः केचन भारतीयाः सदस्याः स्वपदं परित्यक्तवन्तः त्यागपत्रदानेन ।



'नेताजी' बोसः

कष्टकरं प्रवासं कुर्वन् क्वचित् जलान्तर्गामिन्या, क्वचिच्च

विमानेन च प्रयाणं कुर्वन् सुभाश्चन्द्रबोसः जपानदेशं प्राप्तवान् । तद्देशीयः प्रधानमन्त्री टोजो उक्तवान् यत् भारतस्य स्वातन्त्र्य-सङ्ग्रामार्थं सर्वविधसाहाय्यं करिष्यते इति ।

भारतीयराष्ट्रियसैन्येन सुभाश्चन्द्रबोसाय 'नेताजी'नामकः बिरुदः प्रदत्तः । नेताजी उदघोषयत् – 'चलत दिल्लीं प्रति' इति । सः अक्टोबर्मासस्य २१ तमे दिनाङ्के सिङ्गपुरनगरे 'अज़ाद्हिन्द्' सर्वकारस्य आरम्भम् उदघोषयत् ।

- प्रथमं राष्ट्रियोद्यानं १९३५ तमे वर्षे देहलीनगरे आरब्धम् । हैली-राष्ट्रियोद्यानम् इत्येतत् तदीयं नाम १९५७ तमे वर्षे 'कार्बेट्-राष्ट्रियोद्यानम्' इति परिवर्तितम् ।



- कुलपतिः के. एम्. मुन्शिवर्यः १९२८ तमे वर्षे भारतीयविद्या-भवनस्य आरम्भं कृतवान् ।

# प्रपञ्चस्य अन्येषु भागेषु....

- थायल्याण्ड्, मलया, जपान् इत्यादिषु देशेषु निवसन्तः भारतीयाः भारतीय-स्वातन्त्र्यसङ्घटनस्य विभागान् स्वप्रदेशे आरभमाणाः सुभाश्चन्द्रबोसं निवेदित-वन्तः यत् भवता अस्माकं नायकत्वं निर्वहता मार्गदर्शनं करणीयम् इति । (१९४२)



- द्वितीयजागतिकयुद्धस्य मुख्यं घटनाद्वयं घोरान्त्यम् अवाप्नोत् । जर्मन्देशीयः सर्वाधिकारी अडाल्फ्हिट्लरः आत्म-हत्यया प्राणान् अत्यजत् । इटलीदेशीयः नायकः मुसलोनी घातितः जातः । १९४५ तमे वर्षे मे-मासे सप्तमे दिनाङ्के जर्मनी शरणम् अगच्छत् । जपान् यद्यपि धैर्येण अतिष्ठत्, तथापि अगस्ट्मासस्य षष्ठे नवमे च दिनाङ्के हिरोशिमा-नागासाकिनगर्योः उपरि अण्वस्त्रं यदा पातितं तदा स च देशः दीनस्थितिम् अवाप्नोत् । अगस्ट्मासस्य १४ दिनाङ्के जपानदेशेन अपि स्वस्य पराजयः अङ्गीकृतः ।

# अधिकारस्य समर्पणम्...

राष्ट्रियसर्वकारस्य निर्माणप्रस्तावं मुस्लिंलीग्जनाः न अङ्गीकुर्वन्ति इति ब्रिटिष्सर्वकारस्य सर्वदा वादः भवति स्म । सी. राजगोपालाचारिमहोदयः कैश्चित् मुस्लिंनेतृभिः मिलितवान् । 'राजगोपालाचारिसूत्रम्'



*सि. राजगोलाचारी*

इत्येव तत् अग्रे प्रसिद्धम् अभवत् । ''युद्धानन्तरं तात्कालिकसर्वकारस्य रचनार्थं मुस्लिंलीग्संस्थया साहाय्यं करणीयम् । मुस्लिंजनाः यत्र आधिक्येन सन्ति तं प्रदेशं पृथक्कृत्य जिन्नावर्यः तस्य अध्यक्षः करिष्यते'' इति राजगोपालाचारिवर्यस्य सूत्रं मुस्लिंलीग्संस्थया न अङ्गीकृतम् । जिन्नावर्यः पाकिस्थानम् इति स्वतन्त्रदेशस्य निर्माणम् इच्छति स्म, न तु राज्यम् । प्रथमं पाकिस्थानम्, अनन्तरमेव स्वातन्त्र्यम् इति तेन निश्चयः कृतः आसीत् । गान्धिमहोदयः १९४४ तमे वर्षे सप्टम्बर्मासे जिन्नावर्येण मिलितवान् । किन्तु तयोः मेलनस्य काऽपि फलश्रुतिः न दृष्टा । काङ्ग्रेस्परतया भूलभाई देसायीवर्यः समानप्रतिनिधित्वस्य तात्कालिकसर्वकारस्य रचनार्थं प्रस्तावं कृतवान् । तत्र काङ्ग्रेस्मुस्लिंलीग्संस्थयोः समानं प्रातिनिध्यं भवति इति तेन उक्तम् ।

आजादहिन्द्सर्वकारस्य केन्द्रं सिङ्गपुरतः रङ्गूनं प्रति परिवर्तितम् अभवत् । रङ्गून् बर्मादेशस्य राजधानी । भारतराष्ट्रियसेना शीघ्रमेव भारतस्य सीमाभागं प्राविशत् । तया सेनया मणिपुरे मोरोङ्प्रदेशे त्रिवर्णध्वजः अपि उड्डायितः । नेताजी सुभाश्चन्द्रबोसः १९४४ तमे वर्षे जून् ६ दिनाङ्के रङ्गूनतः आकाशवाणीभाषणम् अपि कृतवान् । तस्मिन् भाषणे गान्धिमहोदयं 'राष्ट्रपिता' इति विवृतवान् सः । नूतनः राजप्रतिनिधिः (वैसराय्) लार्ड् वेवेल् इंग्लेड्देशे ज्येष्ठैः सह चर्चां कृत्वा १९४५ तमे वर्षे अधिकारसमर्पणस्य घोषणां कृतवान् । तस्य कथनम् आसीत् - ''अधिकारस्य समर्पणं पूर्णरूपेण तात्कालिकं भवति । तेन संविधानस्य रचनायां काऽपि बाधा न भवेत् । कार्यरचनासमित्यां काङ्ग्रेस्मुस्लिंलीग्संस्थयोः समानं प्रातिनिध्यं भवति । तत्र राजप्रतिनिधिः सेनाध्यक्षः चेति उभौ एव आंग्लौ भवतः'' इति । सर्वदलीया सभा सिम्लानगरे आयोजिता । तत्र जिन्नावर्येण उक्तं यत् पाकिस्थानस्य पृथक्करणात् ऋते अन्यप्रस्तावः सर्वथा न अङ्गीक्रियते इति ।

सिम्लासभायाः प्रमुखप्रयोजनं नाम – 'भारतं त्यज्यताम्' इति यत् आन्दोलनं प्रवृत्तम् आसीत्, तत्र बद्धानां विमोचनम् एव ।

संस्थानीयराज्यपालानां गोष्ठ्यां – 'सार्वत्रिकनिर्वाचनानि भवन्तु' इति घोषणा कृता । राजप्रतिनिधिना एषः प्रस्तावः अङ्गीकृतः । निर्वाचने भागः स्वीकरणीयः इति काङ्ग्रेस्पक्षेण निर्णीतम्, किन्तु अन्याः सूचनाः तेन तिरस्कृताः ।



- जलियन्वालाबाग्-हत्याकाण्डप्रकरणस्य प्रतिक्रियारूपेण उधमसिङ्गः भूतपूर्वं पञ्जाब्राज्यपालं मैकेल् डयरम् अमारयत् । जनरल् डयरः जलियन्-वालाबाग् इत्यत्र प्रवृत्तायां सभायां गोलकास्त्रप्रयोगं कर्तुम् आदिष्टवान् आसीत् । १९४० तमे वर्षे लण्डन्नगरे कस्मिंश्चित् सभाङ्गणे उधमसिङ्गः तं मारितवान् । २१ वर्षेभ्यः पूर्वं जलियन्-वालाबाग्प्रकरणे व्रणितवत्सु उधमसिङ्गः अन्यतमः आसीत् ।

# प्रपञ्चस्य अन्येषु भागेषु....

- विश्वसंस्थायाः प्रथमम् अधिवेशनं १९४६ तमे वर्षे जनवरीमासस्य दशमे दिनाङ्के लण्डन्नगरे प्रवृत्तम् । ५९ देशेभ्यः आगताः प्रतिनिधयः तत्र भागम् ऊढवन्तः । 'विश्वसंस्थायाः केन्द्रम् अमेरिका-संयुक्तसंस्थानस्य न्यूयार्क्नगरे भवतु' इति अधिवेशने निश्चितम् ।
- अमेरिकादेशस्य कयाचित् संस्थया विद्युत्कम्बलस्य गवेषणं कृतम् । (१९४६)
- प्रथमविमानस्य प्रतिघण्टं वेगः १२०० कि. मी. आसीत् । (१९४७)
- विश्वसंस्थया अन्ताराष्ट्रियस्तरे प्रकृत्याः संरक्षणार्थं पर्यावरणस्य समस्याः परिहर्तुं च कश्चन विभागः आरब्धः । (१९४८)

- प्रथमप्राङ्गणचित्रमन्दिरस्य (Drive in Theatre) आरम्भः अमेरिकादेशस्य न्यूजर्सीनगरे अभवत् । (१९३३)
- मास्कोनगरे भूगर्भमार्गेण विद्युत्-शकटः कार्यारम्भम् अकरोत् । (१९३५)
- जनसहितं हेलिकाप्टरवाहनम् ऐदम्प्राथम्येन जर्मन्देशे डयनम् अकरोत् । (१९३६)

# स्वातन्त्र्यप्राप्तिः आसन्ना

तन्मध्ये ऐ. एन्. ए. सैनिकान् देहलीगमन-मार्गे ब्रिटिष्सैनिकाः अवरुद्धवन्तः । ब्रिटिष्सैन्यं बर्मदिशस्य दिशि प्रस्थितम् अस्ति इति ज्ञात्वा नेताजी रङ्गूनतः ब्याङ्काक् गतवान् । तत्र तेन श्रुतं यत् - जर्मन्देशः शरणम् आगतः इति । सः ततः मलयदेशं गतवान् । तत्र तेन ज्ञातं यत् 'जपान्देशः अपि शरणम् आगतः' इति । सः पुनश्च सिङ्गपुरं गत्वा इतरसचिवैः सह चर्चितवान् । ते नेताजीवर्यं - "भवान् भूगतः भवतु । अनन्तरं प्रत्यागत्य स्वतन्त्रसेनायाः नेतृत्वं वहतु" इति सूचितवन्तः । मार्गमध्ये रशिया-देशेन आक्रान्ते मञ्चूरियागणराज्ये प्रयाणावसरे जपान्देशतः साहाय्यस्य आश्वासनं प्राप्तं नेताजीवर्येण । अगस्ट्मासस्य २२ दिनाङ्के (१९४५) विमानमार्गेण गमनसमये 'तैपे' इत्यत्र प्रवृत्ते अपघाते सः मृतः इति वार्ता आगता । तद्दिनस्य वार्तायाः वास्तविकता इदानीमपि अस्पष्टा अस्ति ।

१९४६ तमे वर्षे केन्द्र-शासन-समित्याः निमित्तं निर्वाचनं प्रवृत्तम् । काङ्ग्रेस्पक्षेण ५६ स्थानानि प्राप्तानि । मुस्लिंलीगेन ३० स्थानानि प्राप्तानि । प्रादेशिकसमितिषु काङ्ग्रेस् ९२३ स्थानानि, मुस्लिंलीग् ४२५ स्थानानि च प्राप्नोत् । बङ्गालराज्ये मुस्लिंलीगेन सर्वकारस्य रचना कृता । पञ्जाबप्रान्ते संमिश्रसर्वकारः, इतरत्र काङ्ग्रेस्सर्वकारः च रचितः । यद्यपि सिन्धप्रान्ते मुस्लिंलीग् बहुमतं प्राप्नोत् तथापि तत्सदस्याः अनन्तरं काङ्ग्रेस्पक्षं प्रविष्टवन्तः ।

भारतीयनायकैः सह समालोचनार्थं त्रयाणां सदस्यानां कश्चन गणः इंग्लेण्डतः आगतः । ते सदस्याः 'भारतीयगणराज्यस्य (इण्डियन्-यूनियन्) निर्माणं भवतु । मुस्लिंजनानां कृते विशेषराज्यस्य आवश्यकता नास्ति' इति अवदन् । 'त्रयः प्रान्ताः रचनीयाः, संविधान-रचनासमित्यां सर्वप्रान्तीयाः मुस्लिंप्रतिनिधयः अपि भवेयुः, संविधानं ब्रिटिष्सर्वकारेण अपि अङ्गीकर्तुम् अर्हं स्यात्' इति निर्णीतम् ।

जून्मासे तात्कालिकसर्वकारस्य रचनायाः घोषणा कृता । हिन्दूनां, मुस्लिंजनानां च एकत्रीकरणं जिन्नावर्येण न अङ्गीकृतम् । मन्त्रि-मण्डलस्य रचनां कर्तुं नेहरूमहोदयः निवेदितः । मन्त्रिमण्डलस्य शपथविधिकार्यक्रमः सप्टम्बर्-मासस्य द्वितीये दिनाङ्के अभवत् । मुस्लिंजनाः तत् दिनं 'करालदिनम्' इति चिन्तितवन्तः ।



जवहरलालनेहरू

किन्तु अनन्तरं मुस्लिंलीग्द्वारा अक्टोबर्मासस्य त्रयोदशदिनाङ्के घोषितं यत् मन्त्रिमण्डले भागः स्वीक्रियते इति । किन्तु पाकिस्थानस्य निर्माणे प्रथमं सोपानं मन्त्रि-मण्डले भागवहनं नाम इति तेषां विचारः आसीत् ।

मुस्लिंजनानां कश्चन गणः एतेन निर्णयेन तृप्तः नासीत् । अतः तत्र तत्र साम्प्रदायिकसङ्घर्षाः अभवन् । बङ्गालप्रान्तस्य कलकत्तानगरे इतरप्रदेशेषु च सङ्घर्षाः अभवन् । हिन्दवः प्रक्षुब्धाः अभवन् । नौखाल्यां, यत्र मुस्लिंजन-बाहुल्यम् आसीत् तत्र, हिन्दूनाम् उग्ररूपमपि

तैः दृष्टम् ।

गान्धिमहोदयः शान्तिसन्देशं स्वीकृत्य १२० कि. मी. मितां शान्तियात्रां कृतवान् । १७ ग्रामाः तेन सम्पर्किताः । हिन्दु-मुस्लिम्-एकता एव तस्य लक्ष्यम् आसीत् ।

१९४६ तमवर्षस्य डिसेम्बर्मासस्य एकादशे दिनाङ्के श्री बाबुराजेन्द्रप्रसादः संसत्सभायाः अध्यक्षरूपेण निर्वाचितः अभवत् । १९४७ तमवर्षस्य जून्मासस्य द्वितीयदिनाङ्के तदानीन्तनः राजप्रतिनिधिः लार्ड्-मौण्ट्ब्याटन् त्रयाणां प्रमुखपक्षाणां (काङ्ग्रेस्, मुस्लिंलीग्, सिख्पक्षः इत्येतेषां) गोष्ठीम् आयोज्य अधिकारपरिवर्तनस्य अन्तिमरूपरेखां सज्जीकृतवान् । परेद्यवि, तत्राम जून्-तृतीयदिनाङ्के, तेन आकाशवाण्यां घोषणा कृता यत् - ''भारतदेशः द्विधा विभक्तः भविष्यति, भारतं पाकिस्थानं चेति'' इति । तयोः देशयोः स्वायत्तता दत्ता आसीत् । एताभ्यां देशाभ्यां ब्रिटिष्कामनवेल्थदेशानां सङ्घटने सदस्यरूपेण स्थातुं स्वातन्त्र्यं दत्तम् आसीत् । ब्रिटिषसर्वकारेण राजप्रभुत्वयुतराज्यानां राज्ञां कृते पूर्णं स्वातन्त्र्यं दत्तम् आसीत् यत् ते कस्मिंश्चित् अपि देशे स्वराज्यं योजयितुम् अर्हन्ति इति । जुलै-१६ दिनाङ्के ब्रिटिष्शासनसभया भारत-स्वातन्त्र्यस्य अधिसूचना पारिता । 'अगस्ट्मासस्य १५ दिनाङ्के अधिकारपरिवर्तनं करणीयं' तैः निर्णयः स्वीकृतः आसीत् ।


*राजेन्द्रप्रसादः*

# भारतस्य कानिचित् 'प्राथम्यानि'

- भारतस्य प्रथमं बालगृहं १९२३ तमे वर्षे मद्रास्नगरे (इदानीं 'चेन्नै' इति निर्दिश्यमाने) भारतीयमहिला-सङ्घटनद्वारा आरब्धम् । (इण्डियन्-वुमेन्स्-असोसियेषन्)
- भारतस्य प्रथमं द्विचक्रिकायन्त्रागारं कलकत्तानगरे आरब्धम् । (१९३८)
- भारतस्य प्रथमरक्तनिधिकेन्द्रं (विश्वे द्वितीयम्) श्रीमता यु. एन्. ब्रह्मचारिवर्येण आरब्धम् । (१९३९)
- बालानां पत्रिकासु अत्यन्तं प्रसिद्धायाः चन्दमामापत्रिकायाः तेलगु-आवृत्तिः १९४७ तमे वर्षे प्रकाशिता । द्वादश-भाषाभिः सा प्रकाश्यमाना आसीत् ।
- स्वातन्त्र्यप्राप्तेः अनन्तरं, भारतस्य प्रथमः मुल्याङ्कः १९४७ तमे वर्षे प्रकाशितः, यत्र त्रिवर्णध्वजस्य चित्रम् आसीत् । तस्य मुल्यं ३ १/२ आणकानि (सामान्यतः २० पैसाः) ।
- सी. राजगोपालचारिमहोदयः प्रथम-भारतीय-गवर्नर्-जनरल्रूपेण अधिकारग्रहणं कृतवान् (१९४८)
- स्वतन्त्रभारतस्य प्रथमसेनाध्यक्षरूपेण जनरल् के. एम्. कारियप्पमहोदयः अधिकारग्रहणं कृतवान् । (१९४९)

# सार्वभौमगणराज्यम् अस्तित्वे आगतम्

अगस्त्मासस्य १४ दिनाङ्के पाकिस्थानदेशः अस्तित्वम् आगतः । जिन्नावर्यः गवर्नर्जनरल्-रूपेण, लियाकत् अलिखानश्च प्रधानमन्त्रिरूपेण अधिकारं गृहीतवन्तौ । मध्यरात्रे १२ वादने जवाहरलालनेहरूमहोदयः भारतस्य भविष्य-निर्णायकम् ऐतिहासिकं भाषणम् अकरोत् । लार्डमौण्ट्ब्याटन् गवर्नर्-जनरल् अभवत् । नेहरूमहोदयः स्वतन्त्र-भारतस्य प्रथमप्रधान-मन्त्रिरूपेण अधिकार-ग्रहणम् अकरोत् ।



*जवाहरलालनेहरू*

सप्टम्बर्मासस्य चतुर्थदिनाङ्के देहल्यां मतीयकोलाहलः प्रवृत्तः । गान्धिमहोदयः नौखलीतः प्रत्यागतवान् । मतवादिनः भारततः मुस्लिम्जनानां, पाकिस्थानतः हिन्दूनां च स्थानपरिवर्तनम् अपेक्षितवन्तः । स्थानपरिवर्तनं न कृतं चेत् सर्वत्र प्रतिक्रियारूपेण सशस्त्रक्रान्तिः भवेत् इति भयम् आसीत् । यद्यपि नियन्त्रणेन शान्तिः प्रसृता अभवत्, तथापि पुनश्च १९४८ तमे वर्षे जनवरीमासे मतीयघर्षणानि प्रवृत्तानि । गान्धिमहोदयः निराहारव्रतम् अनुष्ठितवान् । पञ्चानां दिनानाम् अनन्तरं यदा मुस्लिम्नेतारः हिन्दुनायकाः च सम्भूय गान्धिवर्यस्य समीपम् आगत्य आश्वासनं दत्तवन्तः तदा एव सः निराहारव्रतं परित्यक्तवान् ।

दुर्दैववशात् गान्धिमहोदयस्य अन्त्यं जनवरी-मासस्य त्रिंशद्दिनाङ्के मतान्धनाथुरामगोडसेद्वारा अभवत् ।



*गान्धिवर्यः*

१९४९ तमे वर्षे नवम्बर्मासस्य षष्ठे दिनाङ्के संविधान-रचनासमित्या स्वीयं कार्यं समापितम् । संसदा हस्तलिखितप्रतिकृतिः अङ्गीकृता । १९५० तमे वर्षे जनवरीमासस्य २६ दिनाङ्के संविधानम् अस्तित्वम् आगतम् । भारतदेशः अधिकृतरूपेण सार्वभौमगणराज्य-रूपेण अस्तित्वम् आगतः । न्यायः, स्वतन्त्रता, समानता, भ्रातृत्वम् इत्यादीनाम् आधारेण सार्वभौमप्रजाप्रभुत्वात्मकगणराज्यस्य उदयः अभवत् ।

काश्मीरराज्ये यत्र राजप्रभुत्वम् आसीत् तत्र महान् सङ्घर्षः आरब्धः । तत्र मस्लिम्जनानां सङ्ख्या अधिका आसीत् । किन्तु राजा हिन्दुः । काश्मीरं भारते अन्तर्भावयितुं राज्ञा हस्ताङ्कनं कृतम् आसीत् । किन्तु कानिचन सङ्घटनानि एतत् न इच्छन्ति स्म । तैः विरोधः प्रकटितः । पाकिस्थानवादिनः पाकिस्थानदेशं प्रचोदित-वन्तः । तस्य फलस्वरूपेण प्रथमभारतपाकयुद्धं प्रवृत्तम् ।

१९४८ तमे वर्षे जनवरीमासस्य प्रथम-दिनाङ्के भारतपाकिस्थानदेशयोः मध्ये सन्धिः कृतः । उभाभ्याम् अपि युद्धस्थगनम् अङ्गी-कृतम् । काश्मीरस्य भविष्यनिर्णयार्थं प्रस्तावः पारितः ।

(*अग्रिममासे* – भारतदेशः प्रगतिपथे, १९५१-२०००)

## ५९. युद्धे पाण्डवानां विजयः

# महाभारतम्

दशदिनानां युद्धस्य समाप्तेः अनन्तरं भीष्मः धराशायी अभवत् । सः शिखण्डिना सह युद्धं न करोति स्म । अतः अर्जुनः शिखण्डिनं पुरतः स्थापयित्वा पृष्ठभागतः बाणवर्षणं कुर्वन् भीष्मं पातितवान् । भीष्मपितामहः तु पतितवान् । किन्तु न मृतः । भीष्मस्य पूर्णं शरीरं बाणैः आवृतम् आसीत् । अतः यदा भीष्मः पतितवान् तदा तस्य शरीरं भूमेः स्पर्शं न अकरोत् । तदा एव तेन पिपासा अनुभूता । तदा अर्जुनः बाणप्रयोगेण पातालगङ्गाम् उपरि आनीतवान् । उत्तरायणं प्रतीक्षमाणः भीष्मः स्वेच्छया शरशय्यायाः उपरि शयितवान् ।

भीष्मस्य अनन्तरं द्रोणाचार्यः कौरव-सेनायाः नेतृत्वं स्वीकृत्य पञ्च दिनानि यावत् युद्धं कृतवान् । सः पद्मव्यूहं रचितवान् । तत्र प्रविष्टः अर्जुनपुत्रः अभिमन्युः शत्रुसैनिकैः मारितः अभवत् । अभिमन्योः पृष्ठतः शेष-पाण्डवाः पद्मव्यूहं प्रवेष्टुं प्रयत्नं कृतवन्तः । किन्तु तान् सर्वान् सैन्धवः (जयद्रथः) द्वारे एव स्थगितवान् । अतः अभिमन्योः साहाय्यं कर्तुं कोऽपि न शक्तवान् ।

एतं विषयं ज्ञात्वा अर्जुनः प्रतिज्ञां कृतवान् यत् 'श्वः सायङ्कालाभ्यन्तरे जयद्रथस्य वधं करिष्यामि एव' इति । सः तथैव कृतवान् अपि ।

ततः द्रोणधृष्टद्युम्नयोः मध्ये घोरं युद्धं





प्रवृत्तम् । तदवसरे युधिष्ठिरस्य मुखात् 'अश्वत्थामा हतः...' इत्येतत् वाक्यार्धं श्रुत्वा द्रोणः शोकोपहतः सन् शस्त्रसंन्यासं स्वीकृतवान् । तदा धृष्टद्युम्नः द्रोणस्य वधं कृतवान् ।

द्रोणस्य अनन्तरं कर्णः कौरवसेनाधिपत्यं स्वीकृत्य युद्धं कृतवान् । कर्णः दुर्योधनम् उक्तवान् यत् शल्यः मम सारथिः भवतु इति । शल्यः कर्णस्य सारथिः भवितुम् अङ्गीकृतवान् । कर्णः दिनद्वयं युद्धं कृतवान् । दिनद्वयम् अपि शल्यः कर्णस्य अवमाननं कुर्वन् भवति स्म । कर्णं हतोत्साहिनं करोति स्म । द्वितीये दिने अर्जुनेन सह युद्धकरणसमये कर्णस्य रथस्य चक्रं पङ्के निमग्नम् अभवत् । कर्णः चक्रम् उपरि आनेतुं प्रयत्नं कुर्वन् आसीत् । तदा एव अर्जुनः तं हतवान् ।

कर्णस्य मरणस्य अनन्तरं शल्यः कौरवाणां सेनापतिः अभवत् । किन्तु सः अपि तस्मिन् एव दिने युधिष्ठिरेण सह युद्धं कुर्वन् हतः अभवत् ।

अष्टादशे दिने युद्धं समाप्तम् अभवत् । एतस्मिन् युद्धे अष्टादशाक्षौहिणीसेना हता अभवत् । दुर्योधनात् ऋते, धृतराष्ट्रपुत्राः सर्वेऽपि हताः अभवन् । भीमः दुश्शासनं निर्दयतया मारितवान् । सर्वेषु पश्यत्सु एव सिंहगर्जनं कुर्वन् दुश्शासनस्य रक्तं पीतवान् सः ।

अस्मिन् युद्धे उभयपक्षीयाः अपि सहस्रशः वीराः सैनिकाः मारिताः अभवन् । पाण्डवानां पक्षे पाण्डवाः, उपपाण्डवाः, युयुत्सुः, सात्यकिः, धृष्टद्युम्नः, शिखण्डी च अवशिष्टाः अभवन् ।

युयुत्सुः धृतराष्ट्रस्य पुत्रः । अतः युद्धसमाप्तिसमनन्तरमेव सः हस्तिनापुरं प्रति गतवान् ।

कौरवाणां पक्षे अश्वत्थामा, कृपाचार्यः, कृतवर्मा, दुर्योधनः च जीविताः । युद्धस्य अन्तिमसमये अश्वत्थाम-कृतवर्म-कृपाचार्याः दुर्योधनम् अन्विष्टवन्तः । किन्तु सः कुत्रापि न दृष्टः । सः स्कन्धे गदाम् आरोप्य कस्यचित् सरोवरस्य समीपं गतवान् आसीत् । अश्वत्थामा कृतवर्मा कृपाचार्यः च जीवन्ति इति सः न जानाति स्म । सरोवरस्य समीपे उपविष्टवतः दुर्योधनस्य समीपं सञ्जयः आगतवान् । स्वस्य पराजयस्य कारणतः, स्वपक्षीयाणां वीराणां मरणस्य कारणतः च दुर्योधनः दुःखसागरे निमग्नः आसीत् । सञ्जयं दृष्ट्वा सः - ''अस्माकं पक्षे भवतः ऋते अन्यः

कोऽपि न अवशिष्टः किम् ? मम पितरं वदतु यत् – 'दुर्योधनः अस्मिन् सरोवरे आत्मनं गोपितवान् इति'' इति उक्त्वा सरोवरं प्रविष्टवान् ।

ततः प्रत्यागच्छन् आसीत् सञ्जयः । मार्गे अश्वत्थामा, कृतवर्मा, कृपाचार्यः च मिलितवन्तः । ते सञ्जयम् अपृच्छन् – ''सञ्जय, दुर्योधनः कुत्र अस्ति इदानीम् ?'' इति ।

सञ्जयः सरोवरं प्रदर्श्य – ''दुर्योधनः जलस्तम्भनं कृत्वा सरोवरे निलीय स्थितवान् अस्ति'' इति अवदत् ।

अश्वत्थामा दुःखं प्रकटयन् – ''प्रायशः सः न जानाति यत् – वयं जीवामः इति । वयं चत्वारः अपि महावीराः स्मः । यदि वयं सम्भूय प्रयत्नं कुर्याम तर्हि असाध्यं किम् अस्ति लोके ? शत्रुसैन्यं किं, देवेन्द्रमपि वयं जेतुं शक्नुयाम । सम्मिलिताः वयं पाण्डवान् जेतुं शक्नुयाम एव'' इति अवदत् ।

ततः ते त्रयः अपि पाण्डवैः सह योद्धुं प्रस्थिताः । किन्तु यावत् ते रणाङ्गणं प्रविष्टवन्तः तावता अन्धकारः प्रसृतः आसीत् । कौरवसैनिकाः स्वपक्षस्य महिलाः हस्तिनापुरं प्रति नयन्तः आसन् ।

युद्धस्य समाप्तेः अनन्तरं पाण्डवाः कृष्णेन सह दुर्योधनस्य अन्वेषणम् आरब्धवन्तः । दुर्योधनस्य अपि वधः करणीयः इति तैः निश्चितम् आसीत् । अन्ते तैः ज्ञातं यत् 'दुर्योधनः सरोवरे अस्ति' इति । ते सर्वे तत्र गतवन्तः । युधिष्ठिरः दुर्योधनम् उद्दिश्य – ''स्वस्य कुलस्य नाशनानन्तरम् अपि स्वप्राणाः



रक्षणीयाः इति भवान् सरोवरे निलीय स्थितवान् किम् ? एतत् अन्याय्यम् । भवान् बहिः आगत्य अस्माभिः सह युद्धं करोतु । भवादृशस्य अहङ्कारिणः भीरुता न शोभते । अस्मान् जयति चेत् एव भवतः राज्याधिकारः सिद्धः भवति । आगच्छतु । अस्मान् पराजयतु तावत्'' इति अवदत् ।

''मम राज्यस्य आवश्यकता नास्ति । भवान् एव राज्यं स्वीकरोतु'' इति उत्तरं दत्तवान् दुर्योधनः ।

''भवता मह्यं राज्यं दानरूपेण दातव्यं नास्ति । राज्यस्य दानं करोमि इति वदति खलु ? भवतः समीपे राज्यं कुत्र अस्ति इदानीम् ? अस्मान् जित्वा एव राज्यं स्वीकरोतु । नो चेत् पराजयम् अङ्गीकरोतु'' इति उक्तवान् युधिष्ठिरः ।



पाण्डवानां कटुवचनैः क्रुद्धः दुर्योधनः सरोवरात् बहिः आगतवान् । तदा भीमेन सह तस्य युद्धम् अभवत् । तस्मिन् युद्धे भीमः दुर्योधनस्य ऊरुभङ्गं कृतवान् ।

ऊरुभङ्गकारणतः दुर्योधनः अधः पतितवान् आसीत् । तदा अश्वत्थामा, कृतवर्मा, कृपाचार्यः च तस्य समीपम् आगताः । दुर्योधनस्य स्थितिं दृष्ट्वा ते महान्तं शोकं प्रकटितवन्तः ।

अश्वत्थामा दुर्योधनस्य पुरतः प्रतिज्ञां कृतवान् - ''अद्य एव रात्रौ पाण्डवानां शेषपाञ्चालानां च वधं करिष्यामि'' इति । अश्वत्थाम्नः वचनैः प्रसन्नः दुर्योधनः तं सेनापतिपदे नियुक्तवान् ।

अनन्तरं त्रयः अपि योद्धारः ततः प्रस्थाय पाण्डवानां शिबिरसमीपे निलीय स्थितवन्तः । तत्र एकम् अरण्यम् आसीत् । तत्र सहस्रशाखः कश्चित् वटवृक्षः आसीत् । ते त्रयः अपि तत्र विश्रान्तिम् अनुभूतवन्तः । स्वस्य शत्रवः यदा निद्रामग्नाः भवन्ति तदा एव तान् मारयितुम् इष्टवान् अश्वत्थामा । यतः पाण्डवैः अपि एतादृशानि अन्याय्यानि कृतानि इति तस्य मतम् आसीत् । सः कृतवर्मणः, कृपाचार्यस्य च अङ्गीकारं बलात् प्राप्तवान् । अनन्तरं ताभ्यां सह एव अश्वत्थामा पाण्डवानां शिबिरस्य समीपं गतवान् । कृतवर्म-कृपाचार्यौ बहिः स्थितवन्तौ । अश्वत्थामा खड्गं स्वीकृत्य अन्तः प्रविष्टवान् । सः धृष्टद्युम्नम् उत्थाप्य तं मारितवान् । वातावरणे परिवर्तनं दृष्ट्वा केचन उत्थितवन्तः । अश्वत्थाम्नः उपरि आक्रमणं कृतवन्तः च । अश्वत्थामा तान् सर्वान् मारितवान् । अनन्तरं त्रयः अपि मिलित्वा शिबिराणि अग्निना दग्धवन्तः । एतां सन्तोषकरीं वार्तां दुर्योधनं श्रावयितुं ते ततः प्रस्थितवन्तः ।

तद्दिने रात्रौ पाण्डवाः शिबिरे न आसन् । यदि स्युः तर्हि ते अश्वत्थाम्ना मारिताः अभविष्यन् । अश्वत्थाम्ना कृतां घोरहत्याम् अवारोधयिष्यन् वा ।

अश्वत्थामा, कृतवर्मा, कृपाचार्यः च यदा दुर्योधनस्य समीपम् आगताः तदा दुर्योधनः अन्तिमक्षणान् गणयन् आसीत् । अश्वत्थाम-कृपाचार्य-कृतवर्माणां द्वारा उपपाण्डवानां मारणवार्तां श्रुत्वा प्रसन्नः दुर्योधनः प्राणान् अत्यजत् ।

पुत्राः बान्धवाः च युद्धे विजयिनः सन्तः अपि अश्वत्थामद्वारा दारुणरीत्या हताः इति

वार्तां श्रुत्वा द्रौपदी, पाण्डवाः च दुःखिताः अभवन् । क्रुद्धः भीमः अश्वत्थामानं हन्तुं प्रस्थितवान् । तदा द्रौपदी - ''अश्वत्थाम्नः शिरसि रत्नमेकम् अस्ति इति मया श्रुतम् अस्ति । तस्य वधं कृत्वा शिरसः रत्नम् आनीय ददाति चेत् एव मम तृप्तिः भविष्यति'' इति उक्तवती ।



अतः भीमः धनुर्बाणादिकं स्वीकृत्य रथम् आरुह्य प्रस्थितवान् । तत् दृष्ट्वा कृष्णः - ''साहाय्यार्थं गच्छतु'' इति अर्जुनं सूचितवान् । कृष्णेन सह युधिष्ठिरः अर्जुनः च रथम् आरुह्य प्रस्थिताः । शीघ्रमेव ते भीमेन मिलितवन्तः । किन्तु भीमं प्रत्यानेतुं ते शक्ताः न अभवन् ।

यदा कृष्णादयः गङ्गातीरं प्राप्तवन्तः, तदा तत्र व्यासमहर्षिः अनुचरैः सह आसीत् । अश्वत्थामा अपि तत्रैव आसीत् । अश्वत्थाम्नः शरीरं धूलिग्रस्तम् आसीत् । सः वल्कलं धृतवान् आसीत् । अश्वत्थामानं दृष्ट्वा भीमः भयङ्करं गर्जनं कृतवान् । भीमं, तस्य पृष्ठतः आगच्छतः कृष्णार्जुनयुधिष्ठिरान् च दृष्ट्वा अश्वत्थामा आश्चर्यचकितः अभवत् । किं करणीयम् इति तेन न ज्ञातम् । तदा सः पित्रा दत्तं ब्रह्मशिरोनामकं शस्त्रम् अभिमन्त्र्य तस्य प्रयोगं कुर्वन् - ''पाण्डवानां नाशः भवतु'' इति उक्तवान् । तदा अर्जुनः अपि कृष्णस्य प्रेरणया तादृशमेव अस्त्रं प्रयुक्तवान् । द्वे अपि अस्त्रे अग्निवर्षणं कुर्वती परस्परं सम्मुखीकरणम् अकुरुताम् ।

तदा व्यासनारदौ तत्र आगत्य अश्वत्थामार्जुनयोः समाश्वासनं कृत्वा अस्त्रं प्रतिस्वीकर्तुं सूचितवन्तौ । अर्जुनः स्वस्य अस्त्रं प्रतिस्वीकर्तुं शक्तः अभवत् । किन्तु अश्वत्थामा तथा कर्तुं न शक्तवान् । सः व्यासमहर्षिं दीनस्वरेण निवेदितवान् - ''अहं भीमं दृष्ट्वा भीत्या अस्त्रप्रयोगं कृतवान् । तत् प्रतिस्वीकर्तुं न शक्नुवन् अस्मि । तत् अस्त्रं पाण्डवानां निर्मूलनं करिष्यति एव'' इति उक्तवान् ।

अश्वत्थाम्नः वचनं श्रुत्वा कृष्णः - ''भवतु नाम । पाण्डवानां वंशस्य अङ्कुरम् उत्तरायाः गर्भे वर्धमानम् अस्ति । तस्य उपरि भवान् अस्त्रप्रयोगं करोतु'' इति अवदत् ।

अन्ते ऋषिभिः निर्णीतं यत् 'अश्वत्थामा शिरोरत्नम् अर्जुनाय दद्यात् । अर्जुनः च अश्वत्थामानं क्षाम्येत्' इति । तदा अश्वत्थामा स्वस्य शिरोरत्नम् अर्जुनाय समर्प्य तपः

आचरितुम् अरण्यं गतवान् । भीमः शिरोरत्नं स्वीकृत्य द्रौपद्यै दत्त्वा - 'इष्टं सिद्धं खलु भवत्याः ? अतः इतःपरं चिन्तां न करोतु' इति तां समाश्वासितवान् ।

द्रौपदी तत् रत्नं युधिष्ठिराय धर्तुं दत्तवती ।

तत्र हस्तिनापुरे धृतराष्ट्रः स्वस्य शतं पुत्राः हताः इति ज्ञात्वा दुःखसागरे मग्नः अभवत् । सञ्जयः तं समाश्वासयन् - ''न केवलं भवतः पुत्राः, अपि तु समग्रा अक्षौहिणीसेना एव नष्टा अभवत् । असंख्याकाः राजानः मृताः अभवन् । तेषां शवसंस्कारस्य व्यवस्थां करोतु'' इति अवदत् ।

धृतराष्ट्रम् अनुसृत्य गान्धारी, कुन्ती, इतराः अन्तःपुरस्त्रियः च युद्धभूमिम् आगताः । एतं विषयं ज्ञात्वा पाण्डवाः, कृष्णः, सात्यकिः, युयुत्सुः च तत्र आगताः ।

युधिष्ठिरः धृतराष्ट्रं प्रणम्य तं द्रष्टुम् आगतवतां परिचयं कारितवान् । धृतराष्ट्रस्य अन्तरङ्गं ज्वलत् आसीत् । सः आरम्भे युधिष्ठिरम् आलिङ्ग्य भीमस्य आलिङ्गनं कर्तुम् उद्युक्तः अभवत् । तदा कृष्णः भीमं पृष्ठतः आकृष्य तस्य स्थाने भीमस्य प्रतिमां स्थापितवान् । धृतराष्ट्रः तां प्रतिमां समग्रशक्त्या आलिङ्गितवान् । प्रतिमा चूर्णीकृता अभवत् । प्रतिमायाः स्थाने यदि भीमः अभविष्यत् तर्हि निश्चयेन तस्य मरणम् अभविष्यत् । यतः धृतराष्ट्रस्य शक्तिः सहस्रगजतुल्या आसीत् । अतः धृतराष्ट्रः लोहस्य प्रतिमां चूर्णीकृत्य स्वयं व्रणितः सन् अधः पतितवान् । तस्य नासिकातः मुखतः च रक्तस्रावः अभवत् । अनन्तरं सः कृतकाश्रूणि स्रावयन् - ''हा भीम, किम् अभवत् भवतः ?'' इति अपृच्छत् ।

कृष्णः धृतराष्ट्रं प्रति - ''राजन्, चिन्तां न करोतु । भवान् भीमं न चूर्णीकृतवान्, प्रत्युत लोहस्य प्रतिमां चूर्णीकृतवान् अस्ति'' इति उक्तवान् । तां प्रतिमां गदायुद्धस्य अभ्यासार्थं दुर्योधनः कारितवान् आसीत् ।

अनन्तरं कृष्णः धृतराष्ट्रस्य सान्त्वनं कृतवान् । तदा धृतराष्ट्रः - ''इतः परं पाण्डवाः एव मम पुत्राः खलु । मम इतरे पुत्राः तु न सन्ति खलु'' इति दुःखेन वदन् भीमार्जुन-नकुल-सहदेवानां शरीरस्य स्पर्शं प्रीत्या कृतवान् ।



आचरितुम् अरण्यं गतवान् । भीमः शिरोरत्नं स्वीकृत्य द्रौपद्यै दत्त्वा – 'इष्टं सिद्धं खलु भवत्याः ? अतः इतःपरं चिन्तां न करोतु' इति तां समाश्वासितवान् ।

द्रौपदी तत् रत्नं युधिष्ठिराय धर्तुं दत्तवती ।

तत्र हस्तिनापुरे धृतराष्ट्रः स्वस्य शतं पुत्राः हताः इति ज्ञात्वा दुःखसागरे मग्नः अभवत् । सञ्जयः तं समाश्वासयन् – ''न केवलं भवतः पुत्राः, अपि तु समग्रा अक्षौहिणीसेना एव नष्टा अभवत् । असंख्याकाः राजानः मृताः अभवन् । तेषां शवसंस्कारस्य व्यवस्थां करोतु'' इति अवदत् ।

धृतराष्ट्रम् अनुसृत्य गान्धारी, कुन्ती, इतराः अन्तःपुरस्त्रियः च युद्धभूमिम् आगताः । एतं विषयं ज्ञात्वा पाण्डवाः, कृष्णः, सात्यकिः, युयुत्सुः च तत्र आगताः ।

युधिष्ठिरः धृतराष्ट्रं प्रणम्य तं द्रष्टुम् आगतवतां परिचयं कारितवान् । धृतराष्ट्रस्य अन्तरङ्गं ज्वलत् आसीत् । सः आरम्भे युधिष्ठिरम् आलिङ्ग्य भीमस्य आलिङ्गनं कर्तुम् उद्युक्तः अभवत् । तदा कृष्णः भीमं पृष्ठतः आकृष्य तस्य स्थाने भीमस्य प्रतिमां स्थापितवान् । धृतराष्ट्रः तां प्रतिमां समग्रशक्त्या आलिङ्गितवान् । प्रतिमा चूर्णीकृता अभवत् । प्रतिमायाः स्थाने यदि भीमः अभविष्यत् तर्हि निश्चयेन तस्य मरणम् अभविष्यत् । यतः धृतराष्ट्रस्य शक्तिः सहस्रगजतुल्या आसीत् । अतः धृतराष्ट्रः लोहस्य प्रतिमां चूर्णीकृत्य स्वयं व्रणितः सन् अधः पतितवान् । तस्य नासिकातः मुखतः च रक्तस्रावः अभवत् । अनन्तरं सः कृतकाश्रूणि स्रावयन् – ''हा भीम, किम् अभवत् भवतः ?'' इति अपृच्छत् ।

कृष्णः धृतराष्ट्रं प्रति – ''राजन्, चिन्तां न करोतु । भवान् भीमं न चूर्णीकृतवान्, प्रत्युत लोहस्य प्रतिमां चूर्णीकृतवान् अस्ति'' इति उक्तवान् । तां प्रतिमां गदायुद्धस्य अभ्यासार्थं दुर्योधनः कारितवान् आसीत् ।

अनन्तरं कृष्णः धृतराष्ट्रस्य सान्त्वनं कृतवान् । तदा धृतराष्ट्रः – ''इतः परं पाण्डवाः एव मम पुत्राः खलु । मम इतरे पुत्राः तु न सन्ति खलु'' इति दुःखेन वदन् भीमार्जुन-नकुल-सहदेवानां शरीरस्य स्पर्शं प्रीत्या कृतवान् ।





# अष्टावधानम्

शारदापुरे पूर्वं सदानन्दः नाम कश्चन अवधानी निवसति स्म । तस्य पिता महापण्डितः । सदानन्दः तु पाण्डित्येन पितरम् अपि अतिशेते स्म । यद्यपि तदीयं वास्तविकं नाम सदानन्दः इति, तथापि अवधानक्षेत्रे तेन प्रदर्शितम् असाधारणं कौशलं दृष्ट्वा जनाः तम् 'अवधानी' इत्येव निर्दिशन्ति स्म ।

अवधानक्षेत्रे शतावधानम् अन्यतमम् । शतावधाने अवधानिनं परितः शतं पण्डिताः उपविशन्ति । ते विविधान् प्रश्नान् पृच्छन्ति । तेषाम् उत्तरं दातव्यं भवति अवधानिना । आदौ एकपादमात्रं वक्तव्यम् । कस्य प्रश्नस्य उत्तररूपेण कः श्लोकपादः उक्तः इति तेन स्मर्तव्यम् । चक्रक्रमेण द्वितीय-तृतीय-चतुर्थपादाः अपि तेन वक्तव्याः । एवं शतावधाने अपूर्वा स्मरणशक्तिः, असाधारणमेधाशक्तिः, असदृशं पाण्डित्यं च आवश्यकं भवति । अवधानी सदानन्दः एतस्मिन् शतावधाने निपुणः ।

अवधानस्य अपरः प्रकारः अष्टवधानं नाम । अष्टावधाने अष्ट पण्डिताः अवधानिनं परितः उपविशन्ति । ते पृच्छकाः । तेषु एकः 'समस्यापूर्तिः करणीया' इति सूचयति । अपरः पुष्पेण अवधानिनं तदा तदा स्पृशन् भवति । तृतीयः असम्बद्धैः प्रश्नैः अवधानिनः अवधानभङ्गं करोति । चतुर्थः चतुरङ्गक्रीडां क्रीडन् क्रीडाविषये प्रश्नान् पृच्छति । पञ्चमः 'विषयविशेषं वर्णयतु' इति अवधानिनम् उक्त्वा प्रत्यक्षरं सम्भाव्याक्षरस्य निषेधं कुर्वन् भवति । अपरः श्लोकस्थानि अक्षराणि अव्यवस्थितक्रमेण पठन् मया उच्यमानः श्लोकः कः इति पृच्छति । अन्यः तदा तदा घण्टां वादयति । अष्टमः व्याकरण-सम्बन्धिप्रश्नान् पृच्छति । एवम् अवधानभङ्गः

पदे पदे प्रचलति चेदपि अवधानिना सर्वेषां समुचितम् उत्तरं दातव्यं भवति । पुष्पस्पर्श-घण्टानादादयः कतिवारं प्रवृत्ताः इति वक्तव्यम् । चतुरङ्गक्रीडायां प्रतिपक्षिणः व्यवहारः कीदृशः स्यात् इति वक्तव्यम् । एवम् अष्टावधानम् अपि अतिकठिनम् एव । तथापि सदानन्दः तु तादृशान् कार्यक्रमान् लीलया निर्वहति स्म ।

कदाचित् पिता चिन्तितवान् यत् पुत्रस्य विवाहः निर्वर्तनीयः इति । श्रीरङ्गवासिनी सुमतिः योग्या वधूः इति तस्य चिन्तनम् । किन्तु सदानन्दस्य चिन्तनं यत् काचित् विदुषी एव परिणेतव्या इति । 'मम पत्नी पाकादि-कार्यनिपुणतामात्रं प्राप्तवती चेत् किं प्रयोजनम् ? तत् कार्यं काचित् पाचिका अपि कुर्यात् । मम पत्नी पाचिकामात्रं न भवेत् । सा पाण्डित्येन मत्समाना स्यात्' इति चिन्तयति स्म सदानन्दः ।

पुत्रस्य चिन्तनं ज्ञात्वा कदाचित् पिता उक्तवान् - ''वत्स ! पाकार्थं काचित् महिला अस्ति चेत्, अन्यकार्यार्थं सेविका नियुक्ता चेत् च किं गृहं गृहायते ? न खलु ? यत्र तादृशी स्थितिः अस्ति तत् गृहम् उपाहारगृहायते । गृहकार्याणि गृहजनैः कृतं चेदेव गृहस्य गृहत्वम् । 'गृहिणी गृहमुच्यते' इति वचनं किं भवता न श्रुतम् ? विवाहानन्तरं पतिपत्न्यौ परस्परसहकारेण गृहकार्याणि कुर्याताम् । साहित्यगोष्ठी एव जीवनस्य लक्ष्यत्वेन यदि परिभाव्यते तर्हि गृहं सर्वथा विनष्टं भवेत्'' इति ।





''भवतः कथनं सामान्यजनानां जीवने युज्यते । अहं तु विद्वान् अस्मि, अवधानी च अस्मि । अतः मत्स्तरानुगुणं यदि अहं वधूं चिन्तयामि तर्हि किम् अनौचित्यं तत्र ? मम जीवनस्य सन्तोषः मया चिन्तनीयः एव खलु ? यदि भवतः वचनम् अनुसृत्य भवता सुचितां काञ्चित् परिणयेयं तर्हि मया आजीवनं कष्टम् अनुभोक्तव्यं भवेत् । तत् अहं सर्वथा न इच्छामि । अतः मम इच्छानुगुणम् अहं विदुषीं काञ्चित् एव परिणेष्यामि'' इति अवदत् सदानन्दः ।

'उपदेशेन पुत्रे परिवर्तनम् आनेतुं न शक्यते' इति विचिन्त्य पिता – ''अस्तु तावत् । भवान् यथा निर्णयति तथैव भवतु । किन्तु सकृत् सुमतिम् अपि पश्यतु नाम मम सन्तोषाय । यदि सा भवते न रोचेत तर्हि सा भवता परिणेतव्या नास्ति । भवदिच्छानुगुणम् अन्यां काञ्चित् परिणेतुम् अर्हति भवान्'' इति अवदत् ।

'सुमतिः सुन्दरी । तां यदि मम पुत्रः पश्येत् तर्हि निश्चयेन विवाहम् अङ्गीकुर्यात्' इति निर्णयः आसीत् पितुः ।

पितुः असन्तोषं जनयितुम् अनिच्छन् सदानन्दः सुमत्याः ग्रामं गतवान् । सुमत्याः पिता तम् आदरेण स्वागतीकृतवान् । पुत्रीम् आहूय उक्तवान् च – ''एषः मम आत्मीय-मित्रस्य पुत्रः सदानन्दः नाम । महापण्डितः अयं शतावधानी, अष्टावधानी च । सप्ताहं यावत् एषः अत्र स्थास्यति । एतस्य सत्कारे काऽपि न्यूनता यथा न भवेत् तथा चिन्तनीयं भवत्या'' इति ।

सुमत्याः सौन्दर्यं दृष्ट्वा सदानन्दः नितराम् आश्चर्यचकितः । नेत्रे विशालीकृत्य तां सकृत् दृष्टवान् सः । ततः सः अचिन्तयत् – 'एतस्याः सौन्दर्यं तु अपूर्वम् । किन्तु किम् एतेन मम ? अहं तु पाण्डित्यम् इच्छामि । एतस्याः पाण्डित्यं नास्ति इति पितुः वचनात् एव ज्ञायते । अतः एतस्याः परिणयः दूरापास्तः । प्रतिगमनसमये मदीयम् आशयं विवृत्य एव गमिष्यामि' इति ।

किन्तु दिनद्वयाभ्यन्तरे तेन स्वविचारः परिवर्तनीयः अभवत् । तत्र कारणं – सुमत्याः कार्यकौशलम् । सुमतिः उषसि एव उत्तिष्ठति स्म । गृहाङ्गणादिकं स्वच्छीकृत्य रङ्गवल्ली-लेखनादिकं सुन्दरतया करोति स्म । मातुः पितुः च पूजाकार्येषु साहाय्यं करोति स्म । पाककार्ये भ्रातृजायायाः साहाय्यं करोति स्म । प्रातः उपाहारपरिवेषणस्य अनन्तरं सरोवरतः

जलम् आनयति स्म । गृहे सर्वेषाम् आवश्यकतायाः पूरणे विशेषावधानवती भवति स्म । गृहं प्रति कोऽपि आगच्छति चेत् किम् आवश्यकम् इति विचार्य यत् करणीयं तत् करोति स्म । एवं सर्वाणि कार्याणि निरन्तरं करोति स्म चेदपि सदा तस्याः मुखे मन्दहासः विलसति स्म । यदि कोऽपि ताम् उपहसेत् तर्हि समुचितेन उत्तरेण सा उपहासकर्तुः मुखपिधानं करोति स्म ।

एतत्सर्वं दृष्ट्वा सदानन्दः निर्णीतवान् - 'एषा सुयोग्या वधूः । मया एषा एव परिणेतव्या' इति ।

एकदा सायङ्काले सुमतिः सदानन्दं ग्रामदर्शनार्थं नीतवती । तदवसरे ग्रामस्य वैशिष्ट्यानि विवृत्य ऐतिहासिकविषयान् सर्वान् विस्तरेण उक्तवती सा ।

तदा सदानन्दः तस्याः बहुमुखप्रतिभां प्रशंसन् अवदत् - ''अहो, भवती बहून् विषयान् जानाति । ग्रामस्य समग्रः इतिहासः भवत्याः जिह्वाग्रे एव अस्ति । किन्तु अहं तु मम ग्रामस्य विषये किञ्चिदपि न जानामि'' इति ।

तदा सुमतिः हसन्ती अवदत् - ''भवान् मम मिथ्याप्रशंसां करोति । भवान् तु महापण्डितः । अहं ग्रामीणा कन्या । क्व भवतः पाण्डित्यं, क्व च मम अल्पज्ञता !! तदस्तु, स्वविषये भवता विशेषतः किमपि न उक्तम् एव । अहं तत् श्रोतुं कुतूहलिनी'' इति ।

तदा सदानन्दः अष्टावधानादिविषयान्



सर्वान् तां विस्तरेण उक्तवान् । सुमतिः सर्वं श्रद्धया श्रुतवती । ततः सदानन्दः हस्तस्थं सुवर्णकङ्कणं दर्शयन् अवदत् - ''मम अवधानप्रतिभायाः निमित्तं सम्माननावसरे दत्तम् एतत्'' इति ।

तदा सुमतिः दीर्घं निश्श्वस्य उक्तवती - ''न जाने, एतादृशस्य कङ्कणस्य धारणं मम ललाटे लिखितं वा न वेति'' इति ।

''सुमते ! किमर्थं तथा उच्यते भवत्या ? अल्पः प्रयासः कृतः चेत् भवती अपि विदुषी भवेत् । वस्तुतः तु अहम् अष्टावधानी । भवती तु सर्वावधानिनी । मम अष्टावधानात् अपि भवत्याः सर्वावधानं नितरां श्रेष्ठम् । भवत्याः स्मरणशक्तिः, कार्यकौशलरीतिः, सहनाशक्तिः च अपूर्वा । अतः भवतीम् अहम् इच्छामि । भवतीं परिणीय अचिरात् एव महाविदुषीं करिष्यामि'' इति अवदत् सदानन्दः ।

तदा सुमतिः उक्तवती - ''अहं विदुषी, अवधाननिपुणा वा भवितुं न इच्छामि । श्रोतृणां सन्तोषजननं श्रेष्ठं कार्यं स्यात् नाम । किन्तु ततोऽपि श्रेष्ठतरं कार्यं तु गृहसदस्यानां सन्तोषजननम् । तेनैव मम तृप्तिः । अतः अहं सद्गृहिणी एव भवितुम् इच्छामि, न तु विदुषी'' इति ।

एतत् श्रुत्वा सदानन्दः क्षणकालस्य मौनस्य अनन्तरम् - ''भवत्या उक्तं युक्तम् एव । मम विद्या विनोदाय, समययापनाय च । भवत्याः कौशलं परोपकाराय, अन्येषां सुखाय, विश्रान्त्यै च । अतः भवत्याः सर्वत्रावधानं मम अष्टावधानात् अपि निश्चयेन श्रेष्ठम् । भवतीं विदुषीं कर्तुं मया यत् चिन्तितं तत् अविवेकपूर्णम् । वस्तुतः एतत् सुवर्ण-कङ्कणं धर्तुं योग्यता भवत्याः एव अस्ति'' इति उक्त्वा सुवर्णकङ्कणं सुमत्याः हस्ते स्थापितवान् ।

ततः केषाञ्चित् दिनानाम् अनन्तरं तयोः विवाहः प्रवृत्तः ।



चन्दमामायाः प्रस्तुतिः

# परोपकारी समीरः

चित्रम् - पाणिः

## पिशाचाभिनयः
















अरुणोदयतः पूर्वं गोविन्दः गृहं प्राप्नोति स्म ।
मां कोऽपि न दृष्टवान् स्यात् इति अहं चिन्तयामि ।


मया कश्चन पिशाचः दृष्टः ।
आम्, वट-वृक्षस्य समीपे
माम् अन्ये अपि बहवः एतम् अंशम् उक्त-वन्तः । इदानीं किं करवाम ?


किं भवता पिशाचविषये श्रुतम् ?
वटवृक्ष-समीपे स्थितस्य पिशाचस्य विषये खलु ?
सः पिशाचः मम पिता इव अस्ति इति श्रुतम्...


पिशाचः ! अहो पिशाचः मां रक्षन्तु कृपया ।
समग्रे ग्रामे पिशाचवार्ता प्रसृता । भीताः जनाः वट-वृक्षसमीपं गमनम् एव परित्यक्तवन्तः ।


जनाः रात्रौ बहिः गमनम् एव परित्यक्तवन्तः ।


किं सः पिशाचः दूरं गतः ?
अत्र कोऽपि पिशाचः नास्ति । शीघ्रम् उत्थाय खादनार्थं किमपि आनयतु भवान् ।


स च पिशाचः सर्वान् मारयन् अस्ति इति श्रूयते ।
यः पिशाचं पश्यति सः निश्चयेन ज्वर-पीडितः भविष्यति ।


क्षेत्रेषु गृहेषु च चौर्यं दिने दिने प्रवृद्धम् । लुण्ठाकाः निर्भयतया जनानां गृहं प्रविश्य लुण्ठयन्ति स्म ।


मरणं प्राप्नुवतां सङ्ख्या ग्रामे दिने दिने प्रवृद्धा । ग्रामजीवनम् आकुलितं जातम् ।
अचिरात् एव किमपि करणीयम् !
एतस्य समाप्तिः कथम् इति न ज्ञायते ।


एतस्य सर्वस्य दुर्लाभं प्राप्तुम् इच्छन् गोविन्दः धान्यादिवस्तूनां मूल्यं द्विगुणीकृतवान् ।






समीरः स्वशुनकेन भैरवेण सह अटन् मङ्गला-पुरं प्राप्तवान् । अचिरात् एव सः ज्ञातवान् यत् ग्रामस्य स्थितिः उत्तमा नास्ति इति ।









अनन्तरदिने समीरः ग्रामपर्यन्तम् अपि ताम् आकृतिम् अनुसृतवान् ।

एतत् कस्य गृहम् ?

एतत् तु आपणिकस्य गोविन्दस्य गृहम् ।

अत्र किं प्रवर्तते इति समीरः परिशीलितवान् । अनन्तरं प्रतिवेशिगृहं गतवान् ।

महेशः स्वजीवनकाले बहून् मुग्धजनान् बहुधा पीडयति स्म ....

...ऋणं दत्त्वा अधिकं वृद्धिं बलात् सङ्गृह्णन् । इदानीं सः पिशाचरूपं प्राप्य जनान् पीडयन् अस्ति ।

आपणिकः गोविन्दः दिने आपणं चालयन् रात्रौ वटवृक्षसमीपे पिशाचवेषेण तिष्ठति । एवं किमर्थम् अभिनीयते तेन ? तस्य उद्देशः कः स्यात् ? मया एतत् रहस्यम् उद्भेदनीयम् ।

सन्ध्याकालपर्यन्तं प्रतीक्ष्य समीरः स्ववेषं परिवर्त्य गोविन्दस्य गृहं गतवान् ।

- (अनुवर्तते)



# भारतम् अवगम्यताम्
# प्रश्नोत्तरम्

एतस्मिन् एव अङ्के भवन्तः सरोजिनीनायुडुविषयं पठितवन्तः स्युः । गान्धिवर्यः तां 'भारतकोकिला' इति प्रशंसितवान् आसीत् । अस्मद्देशस्य तादृशीनां प्रसिद्धमहिलानां विषये कियत् जानन्ति भवन्तः ?

१. भारतस्य राजधानीत्वप्राप्तितः पूर्वं देहलीनगरं कयाचित् महिलया शास्यते स्म । तस्याः नाम किम् ? कियत्कालं शासनं कृतवती सा ?
२. विदेशीया काचित् महिला भारते वसन्ती 'भारतरत्न'-प्रशस्तिं 'नोबेल्'पारितोषिकं च प्राप्तवती । सा का ?
३. यस्याः विषये गौरवप्रदर्शनाय भारतेन नाणकम् उट्टङ्कितं, सा का ?
४. जवहरलालनेहरूवर्यस्य नेतृत्वेन युक्तस्य प्रथममन्त्रिमण्डलस्य सदस्यतां प्राप्तवती महिला का ?
५. नेताजी सुभाश्चन्द्रबोसवर्येण संस्थापितस्य अझाद्-हिन्द्सर्वकारस्य सदस्या का आसीत् ?
६. भारतीयराष्ट्रियकाङ्ग्रेस्संस्थायाः प्रथमा अध्यक्षा का आसीत् ?
७. राज्यसभायै चिता प्रथमा नटी का ?
८. 'भक्तमीरा'नामके भक्तिप्रधाने हिन्दीचलनचित्रे का दक्षिणभारतीया प्रसिद्धा वैणिकविदुषी प्रमुखं पात्रं निरूढवती ?
९. का भारतीया लेखिका प्रथमकृतेः निमित्तम् एव 'बूकर्'प्रशस्तिं प्राप्तवती ?
१०. ज्ञानपीठप्रशस्तिं प्राप्तवती प्रथममहिला का ?
११. प्यारिस्नगरीयायाः 'ग्रचाण्ड् सलोन्'संस्थायाः सदस्यतां प्राप्तवती प्रथमभारतीयमहिला (प्रथम-एशियन्महिला चापि) का ?
१२. गिन्नीस्पुस्तके कस्याः भारतीयमहिलायाः नाम्नः योजनं जातम् ? तया साधितः विक्रमश्च कः ?

*(उत्तराणि अग्रिमे मासे)*

## योग्येन क्रमेण कथासमाप्तिं संसूच्य पुरस्कारः प्राप्यताम्

# सर्जनात्मिका स्पर्धा

*अधः एकस्याः कथायाः आरम्भः दत्तः अस्ति । उत्तमां कथां रचयितुं अपेक्षितानि उपादानकारणानि सर्वाणि सन्ति तत्र । तानि उपयुज्य कथायाः पूर्णः आकारः परिकल्पनीयः भवद्भिः । कथासमाप्तेः विभिन्नान् प्रकारान् चिन्तयित्वा योग्यां चित्वा लिखन्तु । योग्या शीर्षिका अपि देया । स्मर्तव्यम् अत्र यत् कथाशेषः १५०-२०० शब्दैः एव रचनीयः । चितायै रचनायै पुरस्कारः दास्यते । सा कथा पत्रिकायां प्रकाशयिष्यते च । एतस्यां स्पर्धायां बालाः एव भागं ग्रहीतुम् अर्हन्ति, न ज्येष्ठाः । कथया सह नाम, सङ्केतं, वयः, कक्ष्यां, विद्यालयनाम, पत्रालयसङ्ख्यां (पिन् कोड्) च विलिख्य - चन्दमामा (संस्कृतम्), अक्षरम्, ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५ इत्येतस्मै सङ्केताय प्रेषयन्तु ।*

वीरसेनः नाम तरुणः युवकः विक्रमपुरे निवसति स्म । सः सुखेन सन्तोषेण च जीवति स्म । तस्य अल्पा एका उत्तमभूमिः आसीत् । तत्र श्रमेण कार्यं कृत्वा ततः प्राप्तं धान्यं नगरं नीत्वा विक्रीणीते स्म सः । सस्यसमृद्धिकाले सः विशेषावधानपूर्वकं स्वक्षेत्रं रक्षति स्म ।

एकस्मिन् वर्षे वृष्टेः अभावतः क्षेत्रे कृता कृषिः लाभदायिनी न जाता । तस्मिन् एव काले आपत्कालनिमित्तं रक्षितं धान्यं चोरैः चोरितम् । किन्तु अनन्तरवर्षे उत्तमा वृष्टिः जाता । अतः कृषिक्षेत्रे सस्यानि सम्यक् प्रवृद्धानि । वीरसेनः क्षेत्ररक्षणे विशेषावधान-वान् जातः ।

सः क्षेत्रस्य एकस्मिन् कोणे रक्षाकुटीरं निर्मितवान् । तत्र उपविश्य सः रात्रौ समग्रं क्षेत्रं परिशीलयति स्म । एकदा एवं रक्षणकाले कुतश्चित् अस्पष्टशब्दः श्रुतः । कोऽपि चौर्यार्थं क्षेत्रम् आगतवान् अस्ति इति अवगतवान् वीरसेनः दण्डं गृहीत्वा धावितवान् ।

तत्र चत्वारः सस्यकर्तने उद्युक्ताः तेन दृष्टाः । कौमुदीप्रकाशे तेन ते सम्यक् अभिज्ञाताः । ते समीपग्रामवासिनः एव । तेषु एकः ब्राह्मणः, अपरः स्वर्णकारः, अन्यः क्षत्रियः, अपरः कृषिकः च । 'एकाकिना मया एतेषां चतुर्णां सम्मुखीकरणं न शक्यम्' इति सः निर्णीतवान् । 'आक्रोशनं कृत्वा जनानाम् आह्वानार्थं प्रयत्नः कृतः चेत् एते निश्चयेन पलायनं करिष्यन्ति' इति निर्णीय सः कमपि उपायं चिन्तयित्वा, दण्डं पार्श्वे क्षिप्त्वा तान् सम्मुखीकृतवान् ।

*वीरसेनेन ते चत्वारः कथं सम्मुखीकृताः ? किं सः तान् लज्जितान् अकरोत् ? कथायाः योग्यां समाप्तिं चिन्तयित्वा समुचितं शिरोनाम संसूच्य* ***फेब्रवरी - २५*** *तः पूर्वं प्रेषयन्तु ।*

**- सम्पादकः**

## जनवरीमासस्य प्रश्नावल्याः उत्तराणि

१. अ. सुदामा, कुचेलः इति नामान्तरं तस्य ।
   आ. प्रह्लादः ।
   इ. ध्रुवः ।
   ई. रोहिताश्वः, राजा हरिश्चन्द्रः, राज्ञी तारावती च ।
   उ. अभिमन्युः ।

२. मेयकन्दरः, सदाशिवाचार्यः च ।



# सर्वसम्मतः निर्णयः

आफ्रिकादेशस्य कस्यचित् अरण्यस्य समीपे डोटुमः नाम कश्चन निर्धनः आसीत् । काष्ठविक्रयणं कृत्वा सः जीवति स्म । वर्धमानं पुत्रं टुण्डीकं दृष्ट्वा सः सन्तोषम् अनुभवति स्म । टुण्डीकः यदा द्वादशवर्षीयः जातः तदा पित्रा सह अरण्यं गत्वा काष्ठसङ्ग्रहणे पितुः साहाय्यम् आरब्धवान् । एतस्मात् डोटुनस्य सन्तोषः प्रवृद्धः ।

एकदा डोटुनः अस्वस्थः जातः । शय्यातः उत्थातुम् अशक्तः सः पुत्रम् आदिष्टवान् यत् अरण्यं गत्वा काष्ठानि सङ्गृह्य आगच्छतु इति । पितुः आदेशं पालयन् टुण्डीकः अरण्यं गतवान् । मध्येमार्गं कश्चन सुहृत् मिलितः । मध्याह्नपर्यन्तं तेन सह क्रीडित्वा अपराह्णे कानिचन काष्ठानि सङ्गृह्य गृहम् आगतवान् टुण्डीकः ।

पुत्रस्य एतत् कृत्यं दृष्ट्वा नितरां कुपितः डोटुनः – ''मूर्ख ! अलसः भवान् । पञ्चषाणि एव काष्ठानि सङ्गृह्य विलम्बेन प्रत्यागतः भवान् । अद्य यदि धनं न प्राप्यते तर्हि श्वः भोजनं कथं प्रचलेत् ? अविवेकिन् ! एतादृशस्य भवतः उपस्थित्या किम् ? निर्गच्छतु इतः । एकं क्षणम् अपि मा तिष्ठतु अत्र'' इति बहुधा तर्जयित्वा श्रान्तिं प्राप्य कम्बलेन आच्छाद्य सुप्तवान् एव ।

पितुः तर्जनात् टुण्डीकः अपि कुपितः । सः अरण्यस्य दिशि गतवान् । बहुदूरं यदा गतं तदा सः नितरां श्रान्तः । महती बुभुक्षा अपि तम् अबाधत । अतः सः एकस्य वृक्षस्य अधः शयनं कृतवान् ।

सायङ्कालः जातः । कश्चन वणिक् सेवकैः सह तेन मार्गेण स्वग्रामं गच्छन् आसीत् । सः वृक्षस्य अधः शयानं टुण्डीकं दृष्टवान् । सः तम् उत्थाप्य अपृच्छत् – ''कः भवान् ? एतस्मिन् अकाले एवं किमर्थं वृक्षस्य अधः शयनं क्रियते ?'' इति ।

आफ्रिकीया जानपदकथा

"अहं कश्चन अनाथः । महती बुभुक्षा मम" इति अवदत् टुण्डीकः । वणिक् तस्मै रोटिकाः दत्तवान् । ताः खादित्वा जलं पीतवान् टुण्डीकः । तस्य मुखे हासः उत्पन्नः । वणिक् निस्सन्तानः आसीत् । टुण्डीके तस्य दया उत्पन्ना । अतः तम् आत्मना सह नीतवान् सः ।

सायङ्कालः अतीतः चेदपि टुण्डीकः यदा न प्रत्यागतः तदा डोटुनः चिन्ताक्रान्तः जातः । मया पुत्रः तर्जितः यत् तत् अनुचितं जातम् इति सः चिन्तितवान् । तस्य चिन्ता दिने दिने प्रवृद्धा । किन्तु पुत्रस्य काऽपि वार्ता न ज्ञाता । पुत्रस्य आगमनं प्रतीक्षमाणः सः कष्टेन दिनानि यापयति स्म ।

वणिक् टुण्डीकं पुत्रवत् पालितवान् । वाणिज्यकौशलानि पाठितवान् सः । अतः टुण्डीकस्य जीवनं सुखेन प्रचलति स्म । किन्तु कदाचित् मातापित्रोः स्मरणं यदा भवति तदा मनसि एव दुःखम् अनुभवति स्म सः । कुत्रचित् कोणे उपविश्य सः अश्रूणि स्रावयति स्म । गृहं विस्मर्तुं सर्वथा न शक्तः सः ।

वणिजः पत्नी टुण्डीके विशेषवात्सल्यं प्रदर्शयति स्म । सा तं पुत्रम् एव मन्यते स्म । एवम् एव कानिचन वर्षाणि अतीतानि ।

डोटुनः कदाचित् अरण्ये प्राप्तान् हस्तिदन्तान् नगरं नीत्वा विक्रीय प्रत्यागच्छन् आसीत् । तदा सः अश्वम् आरुह्य गच्छन्तं पुत्रसदृशम् एकं तरुणं दृष्ट्वा आश्चर्येण उच्चस्वरेण अवदत् - "वत्स ! तिष्ठतु तावत्" इति । अश्वारोही गमनं स्थगितवान् । डोटुनः तस्य समीपं गत्वा तं परीक्षादृष्ट्या पश्यन् - "भवान् टुण्डीकः ननु ? अदृश्यतां गतः मम पुत्रः टुण्डीकः भवान् एव खलु ?" इति अवदत् ।



टुण्डीकः अश्वात् अवतीर्य - "अहं टुण्डीकः एव अस्मि" इति वदन् डोटुनं विनयेन नमस्कृतवान् ।

दुरवस्थाम् आपन्नं वृद्धं पितरं दृष्ट्वा टुण्डीकः अवदत् - "तात ! यत्र अहं वसामि तत् गृहं गच्छाम तावत् । कानिचन दिनानि भवान् तत्र विश्राम्यतु" इति ।

डोटुनः पुत्रस्य प्रार्थनाम् अङ्गीकृतवान् । ततः उभौ अपि वणिजः गृहं प्राप्तवन्तौ । टुण्डीकः वणिजे पितुः परिचयम् उक्तवान् । वणिक् डोटुनस्य विषये आदरेण एव व्यवहृतवान् ।

अनन्तरदिने प्रातः ततः निर्गच्छन् डोटुनः वणिजम् अवदत् - "मम पुत्रम् अहम् आत्मना सह नेष्यामि" इति ।

"कथम् एतत् शक्यते मित्र ! एषः इदानीं

न भवतः पुत्रः, अपि तु मम । भवान् एतं गृहात् निष्कासितवान् । निराश्रयाय एतस्मै मया आश्रयः दत्तः । पालनपोषणादिकं च कृतम् । अतः एतत् एव तस्य गृहम् । अहम् एव एतस्य पिता'' इति अवदत् वणिक् ।

''सौभाग्यवशात् अद्य मम पुत्रः प्राप्तः अस्ति । एतं विना कथम् अहं गृहं गच्छेयम् ? मया एतस्मिन् कोपः दर्शितः, तत्कारणतः एषः गृहात् निर्गतः इति तु सत्यम् । कस्मिन् गृहे वा पितापुत्रयोः कलहः न भवति ? सहजं तत् । तावता पुत्रः अपुत्रः न भवति'' इति अवदत् डोटुनः ।

एवं वणिग्-डोटुनयोः विवादः दीर्घकालं प्रवृत्तः । अन्ते वणिक् अवदत् - ''एषा समस्या टुण्डीकेन एव परिहर्तुं शक्या । मया सह स्थातव्यम्, उत भवता सह इति सः एव निर्णयतु नाम । तस्य निर्णयम् आवां पालयाव'' इति ।

''अस्तु । टुण्डीकस्य निर्णयः मया अपि अङ्गीकरिष्यते'' इति उक्तवान् डोटुनः ।

''श्वः प्रातः निर्णयः भवतु'' इति उक्तवान् वणिक् । अनन्तरदिने डोटुन-टुण्डीकाभ्यां सह प्रस्थितवान् वणिक् । तस्य हस्ते एकः तीक्ष्णः खड्गः आसीत् । 'वणिक् खड्गं स्वीकृत्य आवां कुत्र नयन् अस्ति' इति न ज्ञातं पितापुत्राभ्याम् ।

अरण्ये नदीतीरस्थम् एकं निर्जनप्रदेशं तौ नीतवान् वणिक् । तत्र सः टुण्डीकाय खड्गं दत्त्वा - ''वत्स ! इदानीं निर्णयकालः उपस्थितः'' इति अवदत् ।

टुण्डीकः आश्चर्येण अपृच्छत् - ''एतेन खड्गेन मया किं निर्णेतव्यम् ?'' इति ।

''यदि भवान् जन्मदात्रा पित्रा सह वासं कर्तुम् इच्छति तर्हि मम शिरः कर्तयतु । यदि मम गृहे वासः इष्यते तर्हि पितुः शिरः कर्तयतु'' इति निर्भावकस्वरेण उक्तवान् वणिक् ।

किञ्चित्कालं मौनेन स्थितवान् टुण्डीकः । अनन्तरं सः मनसि एव किमपि निश्चित्य - ''मम कर्तव्यं किम् इति निर्णीतम् अस्ति मया । एषोऽहं मम शिरः स्वयं कर्तयिष्यामि'' इति वदन् शिरसः कर्तनार्थं खड्गम् उन्नीतवान् ।



तदा झटिति तौ उभौ तं तस्मात् प्रयत्नात् निवार्य अवदताम् - ''वत्स ! एवं न करणीयं भवता । एतत् उचितं न'' इति ।

त्रयाणाम् अपि नेत्राणि अश्रुपूर्णानि जातानि । अन्ते ते परस्परं समालोच्य अपरं परिहारमार्गं चिन्तितवन्तः । तदनुगुणं डोटुनः पत्न्या सह वणिजः गृहं प्रति वासार्थम् आगतवान् । सर्वे सन्तोषेण वासम् आरब्धवन्तः । टुण्डीकः उभौ पितरौ, उभौ मातरौ च प्राप्य सुखेन जीवितवान् ।

# उत्कोचग्राहिता

वरदपुरराज्ये उत्कोचग्राहिता अत्यधिकतया प्रवृद्धा । तां दुष्टप्रवृत्तिं निग्रहीतुं राजा सर्वथा न शक्तवान् । अतः उत्कोचग्राहकाः यदा लभ्यन्ते तदा तेषां मुण्डनं कारयति स्म सः । एतत् मुण्डनकार्यं कस्मैचित् क्षौरिकाय अर्पितम् ।

एकदा राजा प्रासादस्य अट्टे स्थित्वा बहिः पश्यन् अपराधि-क्षौरिकयोः वाग्वादं दृष्टवान् । वादविषयं ज्ञातुम् इच्छन् सः तौ आहूय पृष्टवान् - ''किमर्थं भवतोः वादः प्रवर्तमानः अस्ति ?'' इति ।

तदा अपराधी उक्तवान् - ''महाराज ! एतस्य सकाशे उभे छुरिके स्तः । एका तीक्ष्णधारायुक्ता, अपरा तीक्ष्णतारहिता । एषः वदति - रूप्यकद्वयं दत्तं चेदेव तीक्ष्णछुरिकया क्षौरं क्रियते, अन्यथा तीक्ष्णतारहितया छुरिकया क्षौरं क्रियते इति । किम् एतत् उचितम् ?'' इति ।





# चित्रशीर्षिकास्पर्धा

अधस्तनचित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?
समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -
**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**





युक्ता शीर्षिका फेब्रवरी - २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते । पुरस्कृता शीर्षिका एप्रिल् - २००१ मासे प्रकाशयिष्यते ।

## अ भि न न्द ना नि



**'डिसेम्बर्'मासीयस्पर्धाशीर्षिकाप्रेषकः-**
**कुन्हिकृष्णन् नायर्**
'श्रीवत्सम्' चेदिचेरी,
पि. परम्बा - पो.
कण्णूरु - ६७० ५९३ केरलम्



*प्रथमचित्रम्* - **यन्त्रसहायः, प्राप्नुयां प्रभूतम् ।**
*द्वितीयचित्रम्* - **अहमसहायः, लभेय यथाशक्ति ।**

